[**वा** पृः ७८; **टी** पृः १९७; **प** पृः २६१]

**प्रवर्तनालक्षणा दोषाः॥१।१।१८॥**

प्रवर्तना प्रवृत्तिहेतुत्वम्। ज्ञातारं हि रागादयः प्रवर्तयन्ति पुण्ये पापे वा। [१]यत्र मिथ्याज्ञानं [२]तत्र रागद्वेषाविति[३]। प्रत्यात्मवेदनीया हीमे दोषाः कस्माल्लक्षणतो निर्दिश्यन्त इति। कर्मलक्षणाः खलु रक्तद्विष्टमूढाः। रक्तो हि तत्कर्म कुरुते येन कर्मणा सुखं दुःखं वा लभते[४]। तथा द्विष्टस्तथा मूढ इति। दोषा रागद्वेषमोहा इत्युच्यमाने बहु नोक्तं भवतीति॥१८॥

[**वा** पृः ७९; **टी** पृः १९८; **प** पृः २६१]

**पुनरुत्पत्तिः प्रेत्यभावः॥१।१।१९॥**

उत्पन्नस्य क्वचित् सत्त्वनिकाये मृत्वा या पुनरुत्पत्तिः स प्रेत्यभावः। उत्पन्नस्य संबद्धस्य। संबन्धस्तु देहेन्द्रियबुद्धिवेदनादिभिः[५]। पुनरुत्पत्तिः पुनर्देहादिभिः संबन्धः। पुनरित्यभ्यासाभिधानम्। यत्र क्वचित् प्राणभृन्निकाये वर्तमानः पूर्वोपात्तान् देहादीन् जहाति तत्प्रैति। यत् तत्रान्यत्र वा देहादीनन्यानुपादत्ते तद्भवति। प्रेत्यभावः मृत्वा पुनर्जन्म। सोऽयं [६]जन्ममरणप्रबन्धाभ्यासोऽनादिरपवर्गान्तः प्रेत्यभावो वेदितव्य इति॥१९॥

---

१. तत्र J २. तत्र Om J ३. रागद्वेषमोहा इति युक्ततरः पाठः। ४. भजते J ५. °न्द्रियबुद्धिवेदनाभिः T; °न्द्रियमनोबुद्धिवेदनाभिः C; °न्द्रियमनोविषयबुद्धिवेदनादिभिः J ६. प्रबन्ध Om J

[**वा** पृ: ७९; **टी** पृ: १९८; **प** पृ: २६२]

**प्रवृत्तिदोषजनितोऽर्थः फलम्॥१।१।२०॥**

सुखदुःखसंवेदनं फलम्। सुखविपाकं कर्म दुःखविपाकं च[1]। तत् पुनर्देहेन्द्रियविषयबुद्धिषु सतीषु भवतीति सह देहादिभिः फलमभिप्रेतम्। तथा हि प्रवृत्तिदोषजनितोऽर्थः फलमेतत्सर्वं भवति। तदेतत् फलमुपात्तमुपात्तं हेयम्, त्यक्तं त्यक्तमुपादेयमिति। नास्य हानोपादानयोर्निष्ठा पर्यवसानं वास्ति। स खल्वयं [2]फलस्य हानोपादानस्रोतसोह्यते लोक इति॥२०॥

[**वा** पृ: ८०; **टी** पृ: १९९; **प** पृ: २६३]

अथैतदेव—

**बाधनालक्षणं दुःखम्॥१।१।२१॥**

बाधना पीडा ताप इति। [3]तयानुविद्धमनुषक्तमविनिर्भागेन वर्तमानं दुःखयोगाद् दुःखमिति। सोऽयं सर्वं दुःखेनानुविद्धम्[4] इति पश्यन् दुःखं जिहासुर्जन्मनि दुःखदर्शी निर्विद्यते। निर्विण्णो विरज्यते। विरक्तो विमुच्यते॥२१॥

[**वा** पृ: ८१; **टी** पृ: २००; **प** पृ: २६४]

यत्र तु निष्ठा यत्र तु पर्यवसानं सोऽयम्—

**तदत्यन्तविमोक्षोऽपवर्गः॥१।१।२२॥**

---

१. कर्मेति for च J  २. फलस्यास्य J  ३, ४. ०बद्धम् J

तेन दुःखेन जन्मना अत्यन्तं विमुक्तिरपवर्गः। कथम्? उपात्तस्य जन्मनो हानम्, अन्यस्य चानुपादानम्। एतामवस्थामपर्यन्तामपवर्गं वेदयन्तेऽपवर्गविदः। तदभयमजरममृत्युपदं ब्रह्म क्षेमप्राप्तिरिति[१]।

नित्यं सुखमात्मनो महत्त्ववत् [२]तत्तु मोक्षेऽभिव्यज्यते। तेनाभिव्यक्तेनात्यन्तं विमुक्तः सुखी भवतीति **केचिन्म**न्यन्ते। तेषां प्रमाणाभावादनुपपत्तिः। न प्रत्यक्षं नानुमानं नागमो वा विद्यते, नित्यं सुखमात्मनो महत्त्ववत्, [३]तत्तु मोक्षेऽभिव्यज्यत इति।

नित्यस्याभिव्यक्तिः संवेदनम्। तस्य हेतुवचनम्। नित्यस्य [४]सुखस्याभिव्यक्तिः संवेदनं ज्ञानमिति[५]। तस्य हेतुर्वाच्यो यतस्तदुत्पद्यत इति।

सुखवन्नित्यमिति चेत्? संसारस्थस्य मुक्तेनाविशेषः। यथा मुक्तः सुखेन तत्संवेदनेन च [६]सन्नित्येनोपपन्नः, तथा संसारस्थोऽपीत्यविशेषः[७] प्रसज्यते उभयस्य नित्यत्वात्।

अभ्यनुज्ञाने च धर्माधर्मफलेन साहचर्यं यौगपद्यं[८] गृह्येत। यदिदमुत्पत्तिस्थानेषु धर्माधर्मफलं सुखं दुःखं च संवेद्यते पर्यायेण, तस्य च नित्यसंवेदनस्य[९] च सहभावो यौगपद्यं गृह्येत। न सुखाभावो नानभिव्यक्तिरस्ति, उभयस्य नित्यत्वात्।

अनित्यत्वे हेतुवचनम्। अथ मोक्षे नित्यस्य सुखस्य संवेदनमनित्यम्, यतस्तदुत्पद्यते स हेतुर्वाच्यः। आत्ममनःसंयोगस्य निमित्तान्तरसहितस्य हेतुत्वम्। [१०]तस्य सहकारिनिमित्तान्तरवचनम्। आत्ममनःसंयोगो हेतुरिति चेत्? एवमपि तस्य सहकारि निमित्तान्तरं वचनीयमिति।

धर्मस्य कारणवचनम्। यदि धर्मो निमित्तान्तरम्? तस्य हेतुर्वाच्यो यत उत्पद्यत इति। योगसमाधिजस्य कार्यावसायविरोधात् प्रक्षये[११] संवेदननिवृत्तिः।

---

१. तुल० बृहदारण्यक ४।४।२५ २, ३. तत्तु Om TC ४. सुखस्य Om TC ५. संवेदनम् उपलब्धिः ज्ञानम् J ६. सन्नित्येन Om J ७. इत्यविशेष Om TC ८. यौगपद्यं Om J ९. °सुखसंवे° J १०. तस्य...वचनम् Om TC ११. प्रलये C var

यदि योगसमाधिजो धर्मो हेतुः? तस्य कार्यावसायविरोधात् प्रक्षये[१] संवेदनमत्यन्तं निवर्तते।

असंवेदने चाविद्यमानेनाविशेषः। यदि धर्मक्षयात् संवेदनोपरमो[२] नित्यं सुखं न संवेद्यत इति किं विद्यमानं न संवेद्यते, अथाविद्यमानमिति नानुमानं विशिष्टेऽस्तीति।

अप्रक्षयश्च धर्मस्य निरनुमानमुत्पत्तिधर्मकस्यानित्यत्वात्[३]। योगसमाधिजो धर्मो न क्षीयत इति नास्त्यनुमानम्। उत्पत्तिधर्मकमनित्यमिति विपर्ययस्य त्वनुमानम्[४]। यस्य तु संवेदनोपरमो नास्ति तेन संवेदनहेतुर्नित्य इत्यनुज्ञेयम्[५]।

नित्ये च मुक्तसंसारावस्थयोरविशेष इत्युक्तम्[६]। यथा मुक्तस्य नित्यं सुखं तत्संवेदनहेतुश्च, संवेदनस्य तूपरमो नास्ति, कारणस्य नित्यत्वात्, तथा संसारस्थस्यापीति। एवं [७]च सति धर्माधर्मफलेन सुखदुःखसंवेदनेन साहचर्यं गृह्येतेति।

शरीरादिसंबन्धः प्रतिबन्धहेतुरिति चेत्? न, शरीरादीनामुपभोगार्थत्वात् विपर्ययस्य चाननुमानात्। स्यान्मतम्, संसारावस्थस्य शरीरादिसंबन्धो नित्यसुखसंवेदनहेतोः प्रतिबन्धकः, तेनाविशेषो नास्तीति? एतच्चायुक्तम्, शरीरादय उपभोगार्थास्ते भोगप्रतिबन्धं[८] करिष्यन्तीति अनुपपन्नम्। न चास्त्यनुमानमशरीरस्यात्मनो भोगः कश्चिदस्तीति।

इष्टाधिगमार्था प्रवृत्तिरिति चेत्? न, अनिष्टोपरमार्थत्वात्। इदमनुमानम्। इष्टाधिगमार्थो मोक्षोपदेशः प्रवृत्तिश्च मुमुक्षूणाम्, नोभयमनर्थकमिति। एतच्चायुक्तम्, अनिष्टोपरमार्थो[९] मोक्षोपदेशः प्रवृत्तिश्च मुमुक्षूणामिति। नेष्टमनिष्टेनाननुविद्धं[१०] संभवतीति अनिष्टानुबन्धात्[११] इष्टमप्यनिष्टं संपद्यते। अनिष्टहानाय च घटमान इष्टमपि जहाति, विवेकहानस्याशक्यत्वादिति।

---

१. प्रलये C var २. °रमे J ३. °स्यानित्य° Om TC ४. °र्ययेऽस्त्य° J ५. °मेयम् TC ६. °क्तं प्राक् J ७. च Om J, C var ८. °उपभोग J ९. °र्थो हि J १०. °बद्ध J ११. अनिष्टानुबन्धात् Om TC

दृष्टातिक्रमश्च देहादिषु तुल्यः यथा दृष्टमनित्यं सुखं परित्यज्य नित्यं सुखं कामयते[१], एवं देहेन्द्रियबुद्धीरनित्या दृष्टा अतिक्रम्य मुक्तस्य नित्या देहेन्द्रियबुद्धयः कल्पयितव्याः। साधीयश्चैवं [२]मुक्तस्य चैकात्म्यं कल्पितं भवतीति।

उपपत्तिविरुद्धमिति चेत्? समानम्। देहादीनां नित्यत्वं प्रमाणविरुद्धं कल्पयितुमशक्यमिति समानमेतत्[३]। सुखस्यापि [४]तर्हि नित्यत्वं प्रमाणविरुद्धं कल्पयितुमशक्यमिति।

**आत्यन्तिके च संसारदुःखाभावे सुखवचनादागमेऽपि सत्यविरोधः।** यद्यपि कश्चिदागमः स्यात् मुक्तस्यात्यन्तिकं सुखमिति? [५]स सुखशब्द आत्यन्तिके संसारदुःखाभावे[६] प्रयुक्त इत्येवमुपपद्यते। दृष्टो हि दुःखाभावे सुखशब्दप्रयोगो बहुलं लोक इति।

**नित्यसुखरागस्याप्रहाणे मोक्षाधिगमाभावो रागस्य बन्धनसमाज्ञानात्।** यद्ययं [७]मोक्षे नित्यं सुखमभिव्यज्यत इति नित्यसुखरागेण मोक्षाय घटमानो न मोक्षमधिगच्छेत्, नाधिगन्तुमर्हतीति। बन्धनसमाज्ञातो हि रागः। न च बन्धने सत्यपि कश्चिन्मुक्त इत्युपपद्यत इति।

[८]**प्रहीणनित्यसुखरागस्याप्रतिकूलत्वम्।** अथास्य नित्यसुखरागः प्रहीयते। तस्मिन् प्रहीणे नास्य नित्यसुखरागः प्रतिकूलो भवति। यद्येवम्, मुक्तस्य नित्यं सुखं भवति, अथापि न भवति, नास्योभयोः पक्षयोर्मोक्षाधिगमो विकल्प्यत इति॥२२॥

॥प्रमेयलक्षणप्रकरणम्॥

---

१. अतिक्रम्य नित्यं मुक्तस्य सुखं कल्पते J २. मुक्तस्य कैवल्यं कल्पितं भविष्यतीति। J ३. समानम् TC ४. तर्हि Om TC ५. स Om TC ६. °संसारदुःखा Om TC ७. मोक्षः C ८. प्रहाणे C var

# [ न्यायपूर्वाङ्गलक्षणप्रकरणम् ]

[**वा** पृ: ८३; **टी** पृ: २०४; **प** पृ: २६८]

स्थानवत [१]एतर्हि संशयस्य लक्षणं वाच्यमिति तदुच्यते—

**समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः॥१।१।२३॥**

समानधर्मोपपत्तेर्विशेषापेक्षो विमर्शः संशय इति। स्थाणुपुरुषयोः समानं धर्ममारोहपरिणाहौ पश्यन् पूर्वदृष्टं च तयोर्विशेषं बुभुत्समानः किंस्विदित्यन्यतरं नावधारयति। यत् तदनवधारणज्ञानं स संशयः। समानमनयोर्धर्ममुपलभे, विशेष-मन्यतरस्य नोपलभ इत्येषा बुद्धिरपेक्षा। सा संशयस्य प्रवर्त्तिका वर्तते। तेन विशेषापेक्षो विमर्शः संशयः।

अनेकधर्मोपपत्तेरिति। समानजातीयमसमानजातीयं चानेकम्। तस्यानेकस्य धर्मोपपत्तेः विशेषस्योभयथा दृष्टत्वात्। समानजातीयेभ्योऽसमानजातीयेभ्यश्चार्था विशिष्यन्ते। गन्धवत्त्वात् पृथिव्यबादिभ्यश्च विशिष्यते, गुणकर्मभ्यश्च। अस्ति च शब्दे विभागजन्यत्वं विशेषः। तस्मिन् द्रव्यं गुणः कर्म वेति सन्देहः[२]। विशेष-स्योभयथा दृष्टत्वात्[३]। किं द्रव्यस्य सतो गुणकर्मभ्यो विशेषः आहोस्विद् गुणस्य सतो द्रव्यकर्मभ्यः, अथ कर्मणः सतो द्रव्यगुणेभ्य इति विशेषापेक्षा अन्यतमस्य व्यवस्थापकं धर्मं नोपलभ इति बुद्धिरिति।

विप्रतिपत्तेरिति। व्याहतमेकार्थदर्शनं विप्रतिपत्तिः, व्याघातो विरोधोऽसहभाव[४] इति। अस्त्यात्मा इत्येकं दर्शनम्, नास्त्यात्मेत्यपरम्। न च सद्भावासद्भावौ

---

१. एवं तर्हि TC २. तुल० वै. सू. (च) २।२।२५ ३. तुल० वै. सू. (च) २।२।२६ ४. सहासंभवः J

सहैकत्र संभवतः। न [१]चान्यतरसाधको हेतुरुपलभ्यते। तत्र तत्त्वानवधारणं संशय इति।

उपलब्ध्यव्यवस्थातः खल्वपि। सच्चोदकमुपलभ्यते तडागादिषु, मरीचिषु चाविद्यमानमुदकमिति। अतः क्वचिदुलभ्यमाने तत्त्वव्यवस्थापकस्य प्रमाणस्यानुपलब्धेः किं सदुपलभ्यतेऽथासदिति संशयो भवति।

अनुपलब्ध्यव्यवस्थातश्च। सच्च नोपलभ्यते मूलकीलकोदकादि, असच्चानुत्पन्नं निरुद्धं वा। ततः क्वचिदनुपलभ्यमाने[२], किं सन्नोपलभ्यते, उतासदिति संशयो भवति। विशेषापेक्षा पूर्ववत्।

पूर्वः समानोऽनेकश्च धर्मो ज्ञेयस्थः, उपलब्ध्यनुपलब्धी पुनर्ज्ञातृस्थे। एतावता विशेषेण पुनर्वचनम्। समानधर्माधिगमात् समानधर्मोपपत्तेर्विशेषस्मृत्यपेक्षो[३] विमर्श इति ॥२३॥

[**वा** पृः ९६; **टी** पृः २१८; **प** पृः २७८]

स्थानवतां लक्षणवचनमिति समानम्।

**यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम् ॥१।१।२४॥**

यमर्थमाप्तव्यं हातव्यं वा व्यवसाय[४] तदाप्तिहानोपायम् अनुतिष्ठति, प्रयोजनं तद् वेदितव्यम्, प्रवृत्तिहेतुत्वात्। इममर्थमाप्स्यामि हास्यामि वेति व्यवसायोऽर्थस्याधिकारः। एवं व्यवसीयमानोऽर्थोऽधिक्रियत इति ॥२४॥

१. ०तरप्रवादस्य साध० J २. ०माने संशयः C ३. विशेषापेक्षो J ४. अध्यवसाय C var

[**वा** पृः ९७; **टी** पृः २२०; **प** पृः २७९]

**लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः ॥१।१।२५॥**

[१]लोकसामान्यमनतीताः लौकिकाः, नैसर्गिकं वैनयिकं च बुद्ध्यतिशयमप्राप्ताः। तद्विपरीताः परीक्षकाः तर्केण प्रमाणैश्चार्थं परीक्षितुमर्हन्तीति। यथा यमर्थं लौकिका बुध्यन्ते, तथा परीक्षका अपि सोऽर्थो दृष्टान्तः। दृष्टान्तविरोधेन हि प्रतिपक्षाः प्रतिषेद्धव्या भवन्तीति। दृष्टान्तसमाधिना च स्वपक्षाः स्थापनीयाः भवन्तीति। अवयवेषु चोदाहरणाय कल्पत इति॥२५॥

॥न्यायपूर्वाङ्गलक्षणप्रकरणम्॥

## [ न्यायाश्रयसिद्धान्तलक्षणप्रकरणम् ]

[**वा** पृः ९८; **टी** पृः २२१; **प** पृः २८०]

अथ सिद्धान्तः। इदमित्थम्भूतं चेत्यभ्यनुज्ञायमानमर्थजातं सिद्धम्। सिद्धस्य संस्थितिः सिद्धान्तः। संस्थितिरित्थम्भावव्यवस्था धर्मनियमः। स खल्वयम्—

**तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः ॥१।१।२६॥**

तन्त्रार्थसंस्थितिस्तन्त्रसंस्थितिः। तन्त्रमितरेतराभिसंबद्धस्यार्थसमूहस्योपदेशः शास्त्रम्। अधिकरणानुषक्तार्थसंस्थितिरधिकरणसंस्थितिः। अभ्युपगमसंस्थितिरनवधारितार्थपरिग्रहः। तद्विशेषपरीक्षणायाभ्युपगमसिद्धान्तः॥२६॥

१. साम्यमन॰ C var

[**वा** पृः ९८; **टी** पृः २२१; **प** पृः २८१]

तन्त्रभेदात् तु खलु—

**स चतुर्विधः सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात्॥१।१।२७॥**

[1]तत्रैताश्चतस्रः संस्थितयोऽर्थान्तरभूताः॥२७॥

[**वा** पृः ९९; **टी** पृः २२२; **प** पृः २८१]

तासाम्—

**सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः ॥१।१।२८॥**

यथा घ्राणादीनीन्द्रियाणि, गन्धादय इन्द्रियार्थाः, पृथिव्यादीनि भूतानि, प्रमाणैरर्थस्य[2] ग्रहणमिति॥२८॥

[**वा** पृः १००; **टी** पृः २२२; **प** पृः २८१]

**समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः ॥१।१।२९॥**

यथा नासत आत्मलाभः, न सत आत्महानम्, निरतिशयाश्चेतनाः, देहेन्द्रियमनःसु विषयेषु तत्तत्कारणेषु च विशेष इति **सांख्यानाम्**। पुरुषकर्मादिनिमित्तो[3]

१. ता एताः J    २. प्रमेयस्य J    ३. कर्मनि० J

भूतसर्गः, कर्महेतवो दोषाः, प्रवृत्तिश्च, स्वगुणविशिष्टाश्चेतनाः, असदुत्पद्यते, उत्पन्नं निरुध्यत इति **योगानाम्**॥२९॥

[**वा** पृः १००; **टी** पृः २२२; **प** पृः २८१]

**यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः ॥१।१।३०॥**

यस्यार्थस्य सिद्धावन्येऽर्था अनुषज्यन्ते, न तैर्विना सोऽर्थः सिध्यति, तेऽर्था [१]यदधिष्ठानाः, सोऽधिकरणसिद्धान्तः। यथा [२]देहेन्द्रियव्यतिरिक्तो ज्ञाता दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिति[३], अत्रानुषङ्गिणोऽर्था इन्द्रियनानात्वम्, नियतविषयाणीन्द्रियाणि, स्वविषयग्रहणलिङ्गानि ज्ञातुर्ज्ञानसाधनानि, गन्धादि-गुणव्यतिरिक्तं द्रव्यं गुणाधिकरणम्, अनियतविषयाश्चेतना इति। पूर्वार्थसिद्धावेतेऽर्थाः सिध्यन्ति। न तैर्विना सोऽर्थः[४] संभवतीति॥३०॥

[**वा** पृः १००; **टी** पृः २२३; **प** पृः २८३]

**अपरीक्षिताभ्युपगमात् तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः ॥१।१।३१॥**

यत्र किञ्चिदर्थजातमपरीक्षितमभ्युपगम्यते, [५]अस्तु द्रव्यं शब्दः, स तु[६] नित्योऽथानित्य इति? द्रव्यस्य सतोऽनित्यता नित्यता [७]वा तद्विशेषः परीक्ष्यते।

---

१. ॰र्थास्तदधि॰ J २. देह॰ Om J ३. न्या. सू. ३।१।१ ४. पूर्वोऽर्थः J
५. अस्ति C var ६. तु किं J ७. च विशेषः J

सोऽभ्युपगमसिद्धान्तः स्वबुद्ध्यतिशयचिख्यापयिषया परबुद्ध्यवज्ञानाय च प्रवर्तत इति ॥३१॥

॥न्यायाश्रयसिद्धान्तलक्षणप्रकरणम्॥

## [ न्यायलक्षणप्रकरणम् ]

[**वा** पृः १०२; **टी** पृः २२५; **प** पृः २८४]

अथावयवाः —

**प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः ॥१।१।३२॥**

दशावयवा**नेके नैयायिका** वाक्ये[१] संचक्षते, जिज्ञासा संशयः शक्यप्राप्तिः प्रयोजनं संशयव्युदास इति। ते कस्मान्नोच्यन्त इति। तत्राप्रतीयमानेऽर्थे प्रत्ययार्थस्य प्रवर्तिका जिज्ञासा। अप्रतीयमानमर्थं कस्माज्जिज्ञासते? तं तत्त्वतो ज्ञातं[२] हास्यामि वोपादास्य उपेक्षिष्ये वेति। ता एता हानोपादानोपेक्षाबुद्धयः तत्त्वज्ञानस्यार्थः। तदर्थमयं[३] जिज्ञासते। सा खल्वियमसाधनमर्थस्येति। जिज्ञासाधिष्ठानं संशयश्च[४] व्याहतधर्मोपसंघातात् तत्त्वज्ञाने प्रत्यासन्नः। व्याहतयोर्हि धर्मयोरन्यतरत् तत्त्वं भवितुमर्हतीति। स पृथगुपदिष्टोऽप्यसाधनमर्थस्येति। प्रमातुः प्रमाणानि प्रमेयाधिगमार्थानि, सा शक्यप्राप्तिर्न साधकस्य वाक्यस्य भागेन युज्यते प्रतिज्ञादिवदिति। प्रयोजनं तत्त्वावधारणमर्थसाधकस्य वाक्यस्य फलं नैकदेश इति। संशयव्युदासः प्रतिपक्षोपवर्णनम्। तत्प्रतिषेधेन[५] तत्त्वज्ञानाभ्यनुज्ञानार्थम्। न त्वयं साधकवाक्यैकदेश इति।

---

१. वाक्यस्य J २. ज्ञात्वा J ३. ॰मयं तत्त्वं J ४. संशयो J
५. ॰षेधे J

प्रकरणे तु जिज्ञासादयः समर्थाः, अवधारणीयार्थोपकारात्। [१]तत्त्वार्थसाधक-भावात् तु प्रतिज्ञादयः साधकवाक्यस्य भागा एकदेशा अवयवा इति॥३२॥

[**वा** पृः १०३; **टी** पृः २२६; **प** पृः २८५]

तेषां तु यथाविभक्तानाम्—

**साध्यनिर्देशः प्रतिज्ञा ॥१।१।३३॥**

प्रज्ञापनीयेन धर्मेण धर्मिणो विशिष्टस्य परिग्रहवचनं प्रतिज्ञा साध्यनिर्देशः। अनित्यः शब्द इति॥३३॥

[**वा** पृः ११२; **टी** पृः २३२; **प** पृः २८६]

**उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः॥१।१।३४॥**

उदाहरणेन सामान्यात् साध्यस्य धर्मस्य साधनं प्रज्ञापनं हेतुः। साध्ये प्रतिसन्धाय धर्ममुदाहरणे च प्रतिसन्धाय तस्य [२]साधनतावचनं हेतुः। उत्पत्ति-धर्मकत्वादिति। उत्पत्तिधर्मकमनित्यं दृष्टमिति॥३४॥

[**वा** पृः ११६; **टी** पृः २३९; **प** पृः २९१]

किमेतावद्धेतुलक्षणमिति? नेत्युच्यते। किं तर्हि?

**तथा वैधर्म्यात्॥१।१।३५॥**

---

१. अर्थसा॰ J २. साधनभाववच॰ J

उदाहरणवैधर्म्याच्च साध्यसाधनं हेतुः। कथम्? अनित्यः शब्द उत्पत्तिधर्मकत्वात्। अनुत्पत्तिधर्मकं नित्यं [१]दृष्टम् आत्मादय इति॥३५॥

[वा पृः १२६; टी पृः २५०; प पृः २९६]

**साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणम्॥१।१।३६॥**

साध्येन साधर्म्यं समानधर्मता। साध्यसाधर्म्यात् कारणात् तद्धर्मभावी दृष्टान्त इति। तस्य धर्मस्तद्धर्मः। तस्येति साध्यस्य। साध्यं च द्विविधं धर्मिविशिष्टो वा धर्मः, शब्दस्यानित्यत्वम्। धर्मविशिष्टो वा धर्मी, अनित्यः शब्द इति। इहोत्तरं तद्ग्रहणेन गृह्यत इति। कस्मात्? पृथग्धर्मवचनात्। तस्य धर्मस्तद्धर्मः। तद्धर्मस्य भावस्तद्धर्मभावः। स यस्मिन् दृष्टान्ते वर्तते स दृष्टान्तस्तद्धर्मभावी[२]। यस्मिन् दृष्टान्ते साध्यसाधर्म्यादुत्पत्तिधर्मकत्वात् साध्यस्य धर्मोऽनित्यत्वं भवति स दृष्टान्तः[२]। साध्यसाधर्म्यादुत्पत्तिधर्मकत्वात् तद्धर्मभावी भवति स च उदाहरणमिष्यते। स्थाल्यादिद्रव्यम् उत्पत्तिधर्मकम् अनित्यं दृष्टमिति[३]। तत्र'यदुत्पद्यते तदुत्पत्तिधर्मकम्। तच्च भूत्वा न भवति आत्मानं जहाति निरुध्यत इत्यनित्यम्। एवमुत्पत्तिधर्मकत्वं साधनम्, अनित्यत्वं साध्यम्। सोऽयमेकस्मिन् द्वयोर्धर्मयोः साध्यसाधनभावः साधर्म्याद् व्यवस्थित उपलभ्यते। तं दृष्टान्त उपलभमानः शब्देऽप्यनुमिनोति। शब्दोऽप्युत्पत्तिधर्मकत्वादनित्यः स्थाल्यादिवदिति। उदाह्रियतेऽनेन धर्मयोः साध्यसाधनभाव इत्युदाहरणम्॥३६॥

---

१. यथा आत्मादि द्रव्यमिति C २. तद्धर्मभावी ... स दृष्टान्तः only in J ३. स्थाल्यादि.... दृष्टमिति only in T. It is supported by the Nyāyavārttika, 1.1.36, p. 127.3. and Nyāyabhāṣya, I. 1. 39, p. 34.14

[वा पृः १२७; टी पृः २५३; प पृः २९८]

**तद्विपर्ययाद् वा विपरीतम्॥१।१।३७॥**

दृष्टान्त उदाहरणमिति प्रकृतम्। साध्यवैधर्म्यादतद्धर्मभावी च दृष्टान्त उदाहरणमिति। अनित्यः शब्दः। उत्पत्तिधर्मकत्वात्। अनुत्पत्तिधर्मकं नित्यमात्मादि[1]। सोऽयमात्मादिदृष्टान्तः साध्यवैधर्म्यादनुत्पत्तिधर्मकत्वादतद्धर्मभावी, योऽसौ साध्यस्य धर्मोऽनित्यत्वं स तस्मिन् न भवतीति। अत्रात्मादौ दृष्टान्त उत्पत्तिधर्मकत्वस्याभावादनित्यत्वं न भवतीति उपलभमानः शब्दे विपर्ययमनुमिनोति, उत्पत्तिधर्मकत्वस्य भावादनित्यः शब्द इति। साधर्म्योक्तस्य हेतोः साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणम्। वैधर्म्योक्तस्य हेतोः साध्यवैधर्म्यादतद्धर्मभावी दृष्टान्त उदाहरणम्। पूर्वस्मिन् दृष्टान्ते यौ तौ धर्मौ साध्यसाधनभूतौ पश्यति, साध्येऽपि तयोः साध्यसाधनभावमनुमिनोति। उत्तरस्मिन् दृष्टान्ते[2] ययोर्धर्मयोरेकस्याभावादितरस्याभावं पश्यति, तयोरेकतरस्य भावादितरस्य भावं साध्येऽनुमिनोतीति। तदेतद्धेत्वाभासेषु न संभवतीत्यहेतवो हेत्वाभासाः। तदिदं हेतूदाहरणयोः सामर्थ्यं परमसूक्ष्मं दुःखबोधं पण्डितरूपवेदनीयमिति॥३७॥

[वा पृः १२९; टी पृः २५५; प पृः ३००]

**उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः॥१।१।३८॥**

---

१. नित्यं दृष्टमात्मादि द्रव्यमिति J  २. पुनः for दृष्टान्ते J

उदाहरणापेक्ष उदाहरणतन्त्र उदाहरणवशः। वशः सामर्थ्यम्। साध्यसाधर्म्ययुक्त उदाहरणे स्थाल्यादिद्रव्यमुत्पत्तिधर्मकमनित्यं दृष्टम्, तथा च शब्द उत्पत्तिधर्मक इति साध्यस्य शब्दस्योत्पत्तिधर्मकत्वमुपसंह्रियते। साध्यवैधर्म्ययुक्ते पुनरुदाहरणे आत्मादिद्रव्यमनुत्पत्तिधर्मकं नित्यं दृष्टम्, न च तथानुत्पत्तिधर्मकः शब्द इति अनुत्पत्तिधर्मकत्वस्योपसंहारप्रतिषेधेनोत्पत्तिधर्मकत्वमुपसंह्रियते। तदिदमुपसंहार-द्वैतमुदाहरणद्वैताद् भवति। उपसंह्रियते अनेनेति चोपसंहारो वेदितव्य इति॥३८॥

[**वा** पृः १२९; **टी** पृः २५७; **प** पृः ३०२]

द्विविधस्य पुनर्हेतोर्द्विविधस्य चोदाहरणस्योपसंहारद्वैते च समानम्—

## हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम्॥१।१।३९॥

साधर्म्योक्ते वा वैधर्म्योक्ते वा यथोदाहरणमुपसंह्रियते तस्मादुत्पत्ति-धर्मकत्वादनित्यः शब्द इति निगमनम्। निगम्यन्ते अनेनेति प्रतिज्ञाहेतूदाहरणोपनया एकत्रेति निगमनम्। निगम्यन्ते समर्थ्यन्ते संबध्यन्ते। तत्र साधर्म्योक्ते तावद्धेतौ वाक्यम्, अनित्यः शब्द इति प्रतिज्ञा। उत्पत्तिधर्मकत्वादिति हेतुः। उत्पत्तिधर्मकं स्थाल्यादि द्रव्यम् अनित्यमित्युदाहरणम्। तथा चोत्पत्तिधर्मकः शब्द इत्युप-नयः। तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्द इति निगमनम्। वैधर्म्योक्तेऽपि, अनित्यः शब्दः। उत्पत्तिधर्मकत्वात्। अनुत्पत्तिधर्मकमात्मादिद्रव्यं नित्यं दृष्टम्। न च तथानुत्पत्तिधर्मकः शब्दः। [१]किं तर्हि? उत्पत्तिधर्मकः। तस्माद् उत्पत्तिधर्मकत्वा-दनित्यः शब्द इति।

अवयवसमुदाये च वाक्ये संभूयेतरेतराभिसंबन्धात् प्रमाणान्यर्थं[२] साधयन्तीति। संभवस्तावत्, शब्दविषया प्रतिज्ञा, आप्तोपदेशस्य प्रत्यक्षानुमानाभ्यां प्रतिसन्धानात्,

१. किं तर्हि? उत्पत्तिधर्मकः Om TC २. अर्थान् C

अनृषेश्च स्वातन्त्र्यानुपपत्तेः। अनुमानं हेतुः, उदाहरणे [१]संदृश्य प्रतिपत्तेः। तच्चोदाहरणभाष्ये व्याख्यातम्। प्रत्यक्षविषयमुदाहरणम्, दृष्टेनादृष्टसिद्धेः। उपमानमुपनयः, तथेत्युपसंहारात्, न तथेति चोपमानधर्मप्रतिषेधे विपरीतधर्मोपसंहारसिद्धेः। सर्वेषामेकार्थप्रतिपत्तौ सामर्थ्यप्रदर्शनं निगमनमिति।

इतरेतराभिसंबन्धोऽपि। असत्यां प्रतिज्ञायामनाश्रया हेत्वादयो न प्रवर्तेरन्। असति हेतौ कस्य साधनभावः प्रदर्श्येत? उदाहरणे साध्ये च कस्योपसंहारः स्यात्? कस्य चापदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनं स्यादिति? असत्युदाहरणे केन साधर्म्यं वैधर्म्यं वा साध्यसाधनमुपादीयेत? कस्य वा साधर्म्यवशादुपसंहारः प्रवर्तेत? उपनयं चान्तरेण साध्येऽनुपसंहृतः साधको धर्मो नार्थं साधयेत्। निगमनाभावे चानभिव्यक्तसंबन्धानां [२]प्रतिज्ञादीनामेकार्थेन प्रवर्तनं तथेति प्रतिपादनं कस्येति।

अथावयवार्थः। साध्यस्य धर्मस्य धर्मिणा संबन्धोपपादनं[३] प्रतिज्ञार्थः। उदाहरणेन समानस्य विपरीतस्य वा साध्यस्य धर्मस्य साधकभाववचनं हेत्वर्थः। धर्मयोः साध्यसाधनभावप्रदर्शनमेकत्रोदाहरणार्थः। साधनभूतस्य धर्मस्य साध्येन धर्मेण सामानाधिकरण्योपपादनमुपनयार्थः। उदाहरणस्थयोर्धर्मयोः साध्यसाधनभावोपपत्तौ। साध्ये विपरीतप्रसङ्गप्रतिषेधार्थं निगमनम्।

न चैतस्यां हेतूदाहरणपरिशुद्धौ सत्यां साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिनिग्रहस्थानबहुत्वं प्रक्रमते। अव्यवस्थाप्य खलु धर्मयोः साध्यसाधनभावमुदाहरणे जातिवादी प्रत्यवतिष्ठते। व्यवस्थिते हि[४] खलु धर्मयोः साध्यसाधनभावे दृष्टान्तस्थे गृह्यमाणे साधनभूतस्य धर्मस्य हेतुत्वेनोपादानं न साधर्म्यमात्रस्य, न वैधर्म्यमात्रस्य वेति[५] ॥३९॥

॥न्यायलक्षणप्रकरणम्॥

---

१. सादृश्यप्र॰ C २. ॰र्थे न प्रतीयेतार्थप्रतिपादकत्वमिति J ३. ॰न्धोपादानं C
४. तु C; च J ५. चेति J

## [ न्यायोत्तराङ्गलक्षणप्रकरणम् ]

[वा पृः १३१; टी पृः २६१; प पृः ३०३]

अत ऊर्ध्वं तर्को लक्षणीय इति, अथेदमुच्यते—

**अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः ॥१।१।४०॥**

अविज्ञायमानतत्त्वेऽर्थे जिज्ञासा तावज्जायते[१] जानीयेममर्थमिति। अथ जिज्ञासितस्य वस्तुनो व्याहतौ धर्मौ विभागेन विमृशति, किंस्विदित्थम् आहोस्विन्नेत्थमिति। विमृश्यमानयोर्धर्मयोरेकतरं[२] कारणोपपत्त्यानुजानाति, संभवत्यस्मिन् कारणं प्रमाणं हेतुरिति। कारणोपपत्त्या स्यादेवमेतत् नेतरदिति।

तत्र निदर्शनम्, योऽयं ज्ञाता ज्ञातव्यमर्थं जानीते, तं तत्त्वतो जानीयेति जिज्ञासा। स किमुत्पत्तिधर्मकोऽथानुत्पत्तिधर्मक इति विमर्शः। विमृश्यमानेऽविज्ञाततत्त्वेऽर्थे यस्य धर्मस्याभ्यनुज्ञाकारणमुपपद्यते, तमनुजानाति। यद्ययमनुत्पत्तिधर्मकः, ततः स्वकृतस्य कर्मणः फलमनुभवति ज्ञाता। दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरमुत्तरं पूर्वस्य पूर्वस्य कारणम्, उत्तरोत्तरापाये च तदनन्तरापायादपवर्गः[३] इति स्यातां संसारापवर्गौ। उत्पत्तिधर्मके ज्ञातरि पुनर्न स्याताम्। उत्पन्नः खलु ज्ञाता देहेन्द्रियविषयबुद्धिवेदनाभिः[४] संबध्यत इति नास्येदं स्वकृतस्य कर्मणः फलम्। उत्पन्नश्च भूत्वा न भवतीति तस्याविद्यमानस्य निरुद्धस्य वा स्वकृतकर्मणः फलोपभोगो नास्ति। तदेवमेकस्यानेकशरीरयोगः [५]शरीरादि-

१. ०त्प्रवर्तते० J    २. ०रेकं C    ३. ०राभावा० J    ४. ०विषय० Om TC    ५. शरीरादिवि० J

वियोगश्चात्यन्तं न स्यादिति, यत्र कारणमनुपपद्यमानं पश्यति, तन्नानुजानाति, सोऽयमेवंलक्षण ऊहस्तर्क इत्युच्यते।

कथं पुनरयं तत्त्वज्ञानार्थो न तत्त्वज्ञानमेवेति? अनवधारणात्। अनुजानात्ययमेकतरं धर्मं कारणोपपत्त्या, न त्ववधारयति न व्यवस्यति न निश्चिनोत्येवमेवेदमिति। कथं तत्त्वज्ञानार्थ इति? तत्त्वज्ञानविषयाभ्यनुज्ञालक्षणादुहाद्[१] भावितात् प्रसन्नादनन्तरं प्रमाणसामर्थ्यात् तत्त्वज्ञानमुत्पद्यत इत्येवं तत्त्वज्ञानार्थ[२] इति।

सोऽयं तर्कः प्रमाणानि प्रतिसंदधानः प्रमाणाभ्यनुज्ञानात्[३] प्रमाणसहितो वादेऽपदिष्ट[४] इति। अविज्ञाततत्त्वेऽर्थे इति[५] यथा सोऽर्थो भवति[६] तस्य तथाभावस्तत्त्वम्, अविपर्ययो याथातथ्यम्॥४०॥

[**वा** पृः १३४; **टी** पृः १६५, **प** पृः ३०४]

एतस्मिंश्च तर्कविषये—

## विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः॥१।१।४१॥

स्थापना साधनम्, प्रतिषेध उपालम्भः। तौ साधनोपालम्भौ पक्षप्रतिपक्षाश्रयौ[७] व्यतिषक्तावनुबन्धेन प्रवर्तमानौ पक्षप्रतिपक्षावित्युच्येते। तयोरन्यतरस्य निवृत्तिः एकतरस्यावस्थानमवर्जनीयमवश्यम्भावित्वात्[८]। यस्यावस्थानं तस्यार्थावधारणं निर्णयः।

नेदं पक्षप्रतिपक्षाभ्यामर्थावधारणं संभवतीति। एको हि प्रतिज्ञातमर्थं तं[९] हेतुतः स्थापयति प्रतिषिद्धं चोद्धरति द्वितीयस्य। द्वितीयेन[१०] स्थापनाहेतुश्च

---

१. ०क्षणानुग्रहे C २. इत्येवं तत्त्वज्ञानार्थः Om J ३. प्रमाणानुग्रहात् J
४. उपदिष्टः J ५. ०ज्ञाततत्त्वमनुजानाति C ६. ०ति स J ७. ०श्रितौ J
८. ०स्थानमवश्यम्भावि TC ९. तं Om CJ १०. ०येन तु प्रतिवादिना J

प्रतिषिध्यते तस्यैव प्रतिषेधहेतुश्चोद्ध्रियते। स निवर्तते। तस्य निवृत्तौ[१] योऽवतिष्ठते तेनार्थावधारणं निर्णयः[२]।

उभाभ्यामेवार्थावधारणमित्याह। कया युक्त्या? एकस्य संभवो द्वितीयस्यासंभवः। तावेतौ संभवासंभवौ विमर्शं सह निवर्तयतः, उभयसंभवे उभयासंभवे वा अनिवृत्तो विमर्श इति।

विमृश्येति विमर्शं कृत्वा। सोऽयं विमर्शः पक्षप्रतिपक्षाववद्योत्य न्यायं[३] प्रवर्तयतीत्युपादीयत इति। एतच्च विरुद्धयोरेकधर्मिस्थयोर्बोद्धव्यम्[४]। यत्र तु धर्मिसामान्यगतौ विरुद्धौ धर्मौ हेतुतः संभवतस्तत्र समुच्चयः, हेतुतोऽर्थस्य तथाभावोपपत्तेः। यथा क्रियावद् द्रव्यमिति लक्षणवचने यस्य द्रव्यस्य क्रियायोगो हेतुतः संभवति तत् क्रियावत्, यस्य न संभवति तदक्रियमिति। एकधर्मिस्थयोश्च विरुद्धयोर्धर्मयोरयुगपद्भाविनोः कालविकल्पः, यथा तदेव द्रव्यं क्रियायुक्तं क्रियावत्, अनुत्पन्नोपरतक्रियं पुनरक्रियमिति।

न चायं निर्णये नियमो विमृश्यैव पक्षप्रतिपक्षाभ्यामर्थावधारणं[५] निर्णय इति। किं [६]तर्हि? भवति खल्विन्द्रियार्थसन्निकर्षादुत्पन्नप्रत्यक्षेऽर्थावधारणं निर्णय इति, परीक्षाविषये तु विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं[७] निर्णयः। वादे शास्त्रे च विमर्शवर्जम्॥४१॥

॥न्यायोत्तराङ्गलक्षणप्रकरणम्॥

॥अवसितं सभाष्ये न्यायदर्शने प्रथमाध्यायस्य प्रथमाह्निकम्॥

१. तस्मिन् निवृत्ते J  २. ०धारणमिति J  ३. न्यायं Om J  ४. धर्मयोर्वेदितव्यम् J  ५. ०भ्यामेवार्था० J  ६. ०त्विन्द्रियार्थसन्निकर्षोत्पन्नप्रत्य० TC  ७. ०भ्यामेवार्था० J

# प्रथमाध्यायस्य द्वितीयाह्निकम्

## [ कथालक्षणप्रकरणम् ]

[**वा** पृ: १३८; **टी** पृ: २७०; **प** पृ: ३०७]

तिस्रः कथा भवन्ति, वादो जल्पो वितण्डा चेति। तासाम्—

**प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः ॥१।२।१॥**

एकाधिकरणस्थौ विरुद्धौ धर्मौ पक्षप्रतिपक्षौ प्रत्यनीकभावात्, अस्त्यात्मा नास्त्यात्मेति। नानाधिकरणस्थौ विरुद्धावपि[1] न पक्षप्रतिपक्षौ यथा नित्य आत्मा, अनित्या बुद्धिरिति। परिग्रहोऽभ्युपगमव्यवस्था। सोऽयं पक्षप्रतिपक्षपरिग्रहो वादः। तस्य विशेषणं प्रमाणतर्कसाधनोपालम्भः [2]प्रमाणतर्कसाधनः प्रमाणतर्कोपालम्भश्च। प्रमाणैस्तर्केण च साधनमुपालम्भश्चास्मिन् क्रियत इति। साधनं स्थापना। उपालम्भः प्रतिषेधः। तौ साधनोपालम्भौ उभयोरपि पक्षयोर्व्यतिषक्तावनुबद्धौ च तावद्[3] यावदेको निवृत्त एकतरो व्यवस्थित इति। निवृत्तस्य उपालम्भो व्यवस्थितस्य साधनमिति।

जल्पे निग्रहस्थानविनियोगाद् वादे तत्प्रतिषेधः। प्रतिषेधे च कस्यचिदभ्यनुज्ञानार्थं सिद्धान्ताविरुद्ध इति वचनम्।

**सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः [ १।२।६ ]**

इति विरुद्धस्य हेत्वाभासस्य निग्रहस्थानस्याभ्यनुज्ञा वादे। पञ्चावयवोपपन्न इति

---

१. अपि only in J २. प्रमाणतर्कसाधनः प्रमाणतर्कोपालम्भश्च Om C; च Om T ३. तावत् only in J

**हीनमन्यतमेनाप्यवयवेन न्यूनम् [ ५।२।१२ ]**

**हेतूदाहरणाधिकमधिकम् [ ५।२।१३ ]**

इति चैतयोरभ्यनुज्ञानार्थमिति॥

अवयवेषु प्रमाणतर्कान्तर्भावे पृथक् प्रमाणतर्कग्रहणं साधनोपालम्भ-व्यतिषङ्गज्ञापनार्थम्। अन्यथोभावपि पक्षौ स्थापनाहेतुना प्रवृत्तौ वाद इति स्यात्। अन्तरेणापि चावयवसंबन्धं प्रमाणान्यर्थं साधयन्तीति दृष्टम्। तेनापि कल्पेन साधनोपालम्भौ वादे भवत इति ज्ञापयति। छलजातिनिग्रहस्थानसाधनोपालम्भो जल्प इति[1] वचनाद् विनिग्रहो जल्प इति मा विज्ञायि, छलजातिनिग्रह-स्थानसाधनोपालम्भ एव जल्पः, प्रमाणतर्कसाधनोपालम्भो वाद एवेति स[2] मा विज्ञायीत्येवमर्थं पृथक् प्रमाणतर्कग्रहणमिति॥१॥

[**वा** पृः १५२; **टी** पृः २८२; **प** पृः ३११]

**यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः ॥१।२।२॥**

यथोक्तोपपन्न इति, प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहः। छलजातिनिग्रहस्थानसाधनोपालम्भ इति, छलजातिनिग्रहस्थानैः साधनमुपालम्भश्चास्मिन् क्रियत इति, एवंविशेषणो जल्पः। न खलु वै छलजातिनिग्रहस्थानैः साधनं कस्यचिदर्थस्य संभवति। प्रतिषेधार्थतैवैषां सामान्यलक्षणे विशेषलक्षणे च श्रूयते

**वचनविघातोऽर्थविकल्पोपपत्त्या छलम् [ १।२।१० ]**

इति,

१. जल्प इति Om J २. स only in J

**साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः [ १।२।१८ ]**

**विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् [ १।२।१९ ]**

इति। विशेषलक्षणेष्वपि यथास्वमिति। न चैतद् विजानीयात् प्रतिषेधार्थतयैवार्थं साधयन्तीति, छलजातिनिग्रहस्थानसाधनोपालम्भो जल्प इत्येवमप्युच्यमाने[१] विज्ञायत एतदिति।

प्रमाणैः साधनोपालम्भयोश्छलजातिनिग्रहस्थानानामङ्गभावः[२] स्वपक्षरक्षणार्थत्वात्[३]। न स्वतन्त्राणां साधनभावः। [४]यत् तत्प्रमाणैरर्थस्य साधनं तत्र छलजातिनिग्रहस्थानानामङ्गभावः [५]स्वपक्षरक्षणार्थत्वात्। तानि हि प्रयुज्यमानानि परपक्षविघातेन स्वपक्षं रक्षन्ति। तथा चोक्तम्—

**तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत् [ ४।२।५ ]**

इति। यश्चासौ[६] प्रमाणैः [७]प्रतिपक्षस्योपालम्भस्तस्य चैतानि प्रयुज्यमानानि [८]प्रतिषेधविघातात् सहकारीणि भवन्ति। तदेवमङ्गभूतानां छलादीनामुपादानं जल्पे, न स्वतन्त्राणां साधनभावः। उपालम्भे तु स्वातन्त्र्यमप्यस्तीति ॥२॥

[**वा** पृः १५५; **टी** पृः २८४; **प** पृः ३१३]

## स प्रतिपक्षस्थापनाहीनो वितण्डा ॥१।२।३॥

स जल्पो वितण्डा भवति। किंविशेषणः? प्रतिपक्षस्थापनया हीनः। यौ तौ समानाधिकरणौ विरुद्धौ धर्मौ पक्षप्रतिपक्षावित्युक्तौ, तयोरेकतरं वैतण्डिको न स्थापयतीति परपक्षप्रतिषेधेनैव प्रवर्तत इति।

---

१. ॰स्थानसाधनोपा...ल्प एवमुच्य॰ J २. छलादीनामङ्ग॰ J ३. स्वपक्ष॰ Om J ४. यत्र प्र॰ J ५. स्वपक्षरक्ष॰ T ६. असौ Om J ७. ॰पक्षसाधनस्यो॰ J ८. प्रतिषेध्यवि॰ J

अस्तु तर्हि स प्रतिपक्षहीनो वितण्डा? यद् वै खलु [१]तत्प्रतिपक्षप्रतिषेधलक्षणं वाक्यं स वैतण्डिकस्य पक्षः। न त्वसौ साध्यं कञ्चिदर्थं प्रतिज्ञाय स्थापयतीति। तस्माद् यथान्यासमेवास्त्विति॥३॥

॥कथालक्षणप्रकरणम्॥

## [ हेत्वाभासलक्षणप्रकरणम् ]

[**वा** पृः १५५; **टी** पृः २८६; **प** पृः ३१४]

हेतुलक्षणाभावादहेतवो हेतुसामान्याद्धेतुवदाभासमानाः[२]। त इमे—

**सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीता हेत्वाभासाः॥१।२।४॥**

[**वा** पृः १६२; **टी** पृः २९१; **प** पृः ३१५]

तेषाम्—

**अनैकान्तिकः सव्यभिचारः॥१।२।५॥**

व्यभिचार एकत्राव्यवस्थितिः[३]। सह व्यभिचारेण वर्तत इति सव्यभिचारः। निदर्शनम्—नित्यः शब्दोऽस्पर्शत्वात्। स्पर्शवान् कुम्भोऽनित्यो दृष्टः। न च तथा स्पर्शवान् शब्दः। [४]किं तर्हि? अस्पर्शः। तस्माद् अस्पर्शत्वान्नित्यः शब्द

---

१. तत् परप्रति° TC २. °सामान्याद्धेतु° Om J ३. °व्यवस्था J
४. किं तर्हि? अस्पर्शः only in J

इति। दृष्टान्ते स्पर्शवत्त्वमनित्यत्वं च धर्मौ न साध्यसाधनभूतौ गृह्येते[१]। स्पर्शवांश्चाणुर्नित्यश्चेति। आत्मादौ च दृष्टान्ते।

**उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः [ १।१।३४ ]**

इति। अस्पर्शत्वादिति हेतुर्नित्यत्वं व्यभिचरति। अस्पर्शा च बुद्धिरनित्या चेति। एवं द्विविधेऽपि दृष्टान्ते व्यभिचारात् साध्यसाधनभावो नास्तीति [२]लक्षणाभावादहेतुरिति।

नित्यत्वमप्येकोऽन्तः। अनित्यत्वमप्येकोऽन्तः। एकस्मिन्नन्ते विद्यत इति। [३]ऐकान्तिको विपर्ययादनैकान्तिकः उभयान्तव्यापकत्वादिति[४]॥५॥

[**वा** पृः १६४; **टी** पृः २९३; **प** पृः ३१७]

## सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः॥१।२।६॥

तं विरुणद्धीति तद्विरोधी, अभ्युपेतं सिद्धान्तं व्याहन्तीति। यथा सोऽयं विकारो व्यक्तेरपैति नित्यत्वप्रतिषेधात्, न नित्यो विकार उपपद्यते। अपेतोऽपि विकारोऽस्ति विनाशप्रतिषेधात्। सोऽयं नित्यत्वप्रतिषेधादिति[५] हेतुर्व्यक्तेरपेतोऽपि विकारोऽस्तीत्यनेन स्वसिद्धान्तेन विरुध्यते। कथम्? व्यक्तिरात्मलाभः। अपायः प्रच्युतिः। यद्यात्मलाभात् प्रच्युतो विकारोऽस्ति, नित्यत्वप्रतिषेधो नोपपद्यते। यद् व्यक्तेरपेतस्यापि विकारस्यास्तित्वम्, तत् खलु नित्यत्वमिति। नित्यत्वप्रतिषेधो नाम विकारस्यात्मलाभात् प्रच्युतेरुपपत्तिः। यदात्मलाभात् प्रच्यवते तदनित्यं दृष्टम्। यदस्ति न तदात्मलाभात् प्रच्यवते। अस्तित्वं चात्मलाभात् प्रच्युतिरिति च[६]

---

१. दृश्येते C var २. हेतुलक्ष॰ J ३. एकान्ते नियतः J ४. ॰व्यापित्वा॰ J
५. अपेतोऽपि अस्ति विनाशप्रतिषेधात्। न नित्यो विकार उपपद्यते इत्ययं J; द्रः योगसूत्र—विभूतिपादे १३शसूत्रभाष्यम्। ६. ॰लाभाच्च प्रच्युतिः J

विरुद्धावेतौ धर्मौ न सह संभवत इति। सोऽयं हेतुर्यं सिद्धान्तमाश्रित्य प्रवर्तते तमेव व्याहन्तीति॥६॥

[वा पृः १६५; टी पृः २९६; प पृः ३१८]

**यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः॥१।२।७॥**

विमर्शाधिष्ठानौ पक्षप्रतिपक्षावुभावनवसितौ[१] प्रकरणम्। तस्य चिन्ता विमर्शात् प्रभृति प्राङ्निर्णयाद् यत् समीक्षणम्[२], सा जिज्ञासा[३] यत्कृता स निर्णयार्थं प्रयुक्त उभयपक्षसाम्यात् प्रकरणमनतिवर्तमानः प्रकरणसमो निर्णयाय न प्रकल्पते[४]। प्रज्ञापनं त्वनित्यः शब्दो नित्यधर्मानुपलब्धेरित्यनुपलभ्यमाननित्यधर्मकमनित्यं दृष्टं स्थाल्यादि[५]।

यत्र समानो धर्मः संशयकारणं हेतुत्वेनोपादीयते स संशयसमः सव्यभिचार एव। या तु विमर्शस्य विशेषापेक्षिता उभयपक्षविशेषानुपलब्धिश्च[६] सा प्रकरणं प्रवर्तयति। यथा[७] शब्दे नित्यधर्मो नोपलभ्यते, एवमनित्यधर्मोऽपि। सेयमुभयपक्ष-विशेषानुपलब्धिः प्रकरणचिन्तां प्रवर्तयति[८]। कथम्? विपर्यये हि[९] प्रकरण-निवृत्तेः। यदि नित्यधर्मः शब्दे गृह्येत, न स्यात् प्रकरणम्। यदि वा अनित्यधर्मो गृह्येत, एवमपि निवर्त्तेत प्रकरणम्। सोऽयं हेतुरुभौ पक्षौ [१०]प्रवर्तयन्नन्यतरस्य निर्णयाय न प्रकल्पते॥७॥

---

१. उभौ Om J २. समीकरणम् J var ३. जिज्ञासा Om J ४. समो भवति। न स निर्णयाय प्रकल्पते। J ५. यथा स्थाल्यादि, J; C adds नित्यः शब्दो वा अनित्यधर्मानुपलब्धेः अनुपलभ्यमानानित्यधर्मकं नित्यं दृष्टमाकाशादि। ६. च Om J ७. यथा च J ८. योजयति J ९. हि Om J १०. ०र्तयन्नान्यतरस्य निर्णयार्थं कल्पत इति J

[**वा** पृः १६६; **टी** पृः २९८; **प** पृः ३२१]

**साध्याविशिष्टः साध्यत्वात् साध्यसमः ॥१।२।८॥**

द्रव्यं छायेति साध्यम्। गतिमत्त्वादिति हेतुः। साध्येनाविशिष्टः साधनीयत्वात् साध्यसमः। [१]अयमप्यसिद्धत्वात् साध्यवत् प्रज्ञापयितव्यः। साध्यं तावदेतत्, किं पुरुषवच्छायापि[२] गच्छति [३]आहोस्विदावरके द्रव्ये संसर्पति आवरणसन्तानाद-सन्निधिसन्तानोऽयं तेजसो गृह्यत इति। सर्पता खलु द्रव्येण यो यस्तेजोभाग आव्रियते, तस्य तस्यासन्निधिरेवाविच्छिन्नो[४] गृह्यत इति। आवरणं तु प्राप्तिप्रति-षेधः॥८॥

[**वा** पृः १६७; **टी** पृः ३०१; **प** पृः ३२६]

**कालात्ययापदिष्टः कालातीतः ॥१।२।९॥**

कालात्ययेन युक्तो यस्यार्थैकदेशोऽपदिश्यमानस्य[५] स कालात्ययापदिष्टः कालातीत इत्युच्यते। निदर्शनम्, नित्यः शब्दः संयोगव्यङ्ग्यत्वाद् रूपवत्। [६]प्रागूर्द्ध्वं च व्यक्तेरवस्थितं रूपं प्रदीपघटसंयोगेन व्यज्यते, तथा च शब्दोऽप्यवस्थितो[७] भेरीदण्डसंयोगेन व्यज्यते, दारुपरशुसंयोगेन वा। तस्मात् संयोगव्यङ्ग्यत्वान्नित्यः शब्द इत्ययमहेतुः कालात्ययापदेशात्। व्यञ्जकस्य संयोगस्य कालं न व्यङ्ग्यस्य रूपस्य व्यक्तिरत्येति। सति [८]प्रदीपसंयोगे रूपस्य ग्रहणं

१. °प्यप्रसिद्ध° J  २. अपि Om J  ३. °स्विद् वावरके द्रव्ये सर्पति J  ४. एव Om J  ५. °मानस्य हेतोः J  ६. यथा प्रागू° J  ७. अपि Om J  ८. प्रदीप-घटसं° J

भवति, न निवृत्ते संयोगे रूपं गृह्यते। निवृत्ते तु[१] दारुपरशुसंयोगे दूरस्थेन शब्दः श्रूयते विभागकाले। सेयं शब्दस्य व्यक्तिः संयोगकालम् अत्येतीति न संयोगनिमित्ता[२] भवति। कस्मात्?

**कारणाभावाद्धि कार्याभाव**[३]

इति। एवमुदाहरणसाधर्म्यस्याभावादसाधनमयं हेतुर्हेत्वाभास इति।

अवयवविपर्यासवचनं तु न सूत्रार्थः। कस्मात्?

यस्य येनार्थसंबन्धो दूरस्थस्यापि तस्य सः[४]।
अर्थतो ह्यसमर्थानामानन्तर्यमकारणम्॥

[५]इत्येतद्वचनाद् विपर्यासेनोक्तो[६] हेतुरुदाहरणसाधर्म्यात् तथा वैधर्म्यात् साध्यसाधनं हेतुलक्षणं[७] न जहाति। अजहद्धेतुलक्षणं न हेत्वाभासो भवतीति।

**अवयवविपर्यासवचनमप्राप्तकालम्**[८] इति च निग्रहस्थानमुक्तम्। तदेवेदं पुनरुच्यत इति। अतस्तन्न[९] सूत्रार्थः॥९॥

॥हेत्वाभासलक्षणप्रकरणम्॥

# [ छलप्रकरणम् ]

[**वा** पृः १६८; **टी** पृः ३०३; **प** पृः ३२७]

अथ छलम्—

## वचनविघातोऽर्थविकल्पोपपत्त्या छलम्॥१।२।१०॥

न सामान्यलक्षणे छलं शक्यमुदाहर्तुम्। विभागे तूदाहरणानि॥१०॥

---

१. तु in J only २. ०निर्मिता C ३. द्रः वै.सू. (च) १.२.१ ४. तत् for सः J ५. अर्थतो.....मकारणम् Om J ६. इति न विप० J ७. ०साधर्म्यात् साध्यसाधनं हेतुरिति तथा वैधर्म्यादित्येतद्धेतुलक्षणं J; cf. न्या. सू. १.१.३४-५ ८. न्या. सू. ५.२.११ ९. अतश्च न J

[**वा** पृ: १६९; **टी** पृ: ३०३; **प** पृ: ३२७]

विभागश्च—

**तत्त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलं च ॥१।२।११॥**

[**वा** पृ: १६९; **टी** पृ: ३०४; **प** पृ: ३२८]

तेषाम्—

**अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम् ॥१।२।१२॥**

नवकम्बलोऽयं माणवक इति प्रयोगः। अत्र नवः कम्बलोऽस्येति वक्तुरभिप्रायः। विग्रहे तु[१] विशेषो न समासे[२]। तत्रायं छलवादी वक्तुरभिप्रायादविवक्षितमन्यमर्थं नव कम्बला अस्येति [३]तावदभिहितं भवतेति कल्पयति। कल्पयित्वा चासंभवेन प्रतिषेधति, एकोऽस्य कम्बलः, [४]कुतो नव कम्बला इति? तदिदं सामान्यशब्दे वाचि निमित्ते[५] छलं वाक्छलमिति।

अस्य प्रत्यवस्थानम्। सामान्यशब्दस्यानेकार्थत्वेऽन्यतराभिधानकल्पनायां विशेषवचनम्। नवकम्बल इत्यनेकार्थाभिधानम्, नवः कम्बलोऽस्येति, नव कम्बला अस्येति च। एतस्मिन् प्रयुक्ते येयं कल्पना नव कम्बला अस्येत्येतद् भवताभिहितम्, तच्च न संभवतीति। एतस्यामन्यतराभिधानकल्पनायां विशेषो वक्तव्यः, यस्माद् विशेषोऽर्थविशेषेषु विज्ञायतेऽयमर्थोऽनेनाभिहित[६] इति। स च विशेषो नास्ति। तस्मान्मिथ्याभियोगमात्रमेतदिति।

---

१. च J　२. °से नवकम्बल इति। J　३. एतदभि° J　४. कुतोऽस्य J
५. °निमित्ते Om TC　६. °विशेषाद् विजानीमोऽयमर्थो भवताभि° J

प्रसिद्धश्च लोके शब्दार्थसंबन्धोऽभिधानाभिधेयनियमनियोगः, अस्याभिधानस्यायमर्थोऽभिधेय अस्याभिधेयस्यायं शब्दोऽभिधानम्[१] इति समानः सामान्यशब्दस्य, विशेषो विशिष्टशब्दस्य[२]। प्रयुक्तपूर्वाश्चेमे[३] शब्दा अर्थे प्रयुज्यन्ते, नाप्रयुक्तपूर्वाः। प्रयोगश्चार्थसंप्रत्ययार्थः। अर्थप्रत्ययाच्च व्यवहार इति। तत्रैवमर्थगत्यर्थे शब्दप्रयोगे सामर्थ्यात् सामान्यशब्दस्य प्रयोगनियमः। अजां ग्रामं नय, सर्पिराहर, ब्राह्मणं भोजयेति सामान्यशब्दाः सन्तोऽर्थावयवेषु प्रयुज्यन्ते सामर्थ्यात्। [४]यत्रार्थक्रियादेशना संभवति तत्र प्रवर्तन्ते नार्थसामान्ये, क्रियादेशनाऽसंभवात्। एवमयं सामान्यशब्दो नवकम्बल इति योऽर्थः संभवति नवः कम्बलोऽस्येति, तत्र प्रवर्तते। यस्तु न संभवति नव कम्बला अस्येति, तत्र न प्रवर्तते। [५]सोऽयमनुपपद्यमानार्थकल्पनया परवाक्योपालम्भस्ते न कल्पत इति॥१२॥

[**वा** पृः १७०; **टी** पृः ३०५; **प** पृः ३२९]

**संभवतोऽर्थस्यातिसामान्ययोगादसंभूतार्थकल्पना[६] सामान्यच्छलम्॥१।२।१३॥**

अहो खल्वसौ ब्राह्मणो विद्याचरणसंपन्न इत्युक्ते कश्चिदाह—संभवति ब्राह्मणे विद्याचरणसंपदिति। अस्य वचनस्य विघातोऽर्थविकल्पोपपत्त्या असंभूतार्थकल्पनया[७] क्रियते यदि ब्राह्मणे विद्याचरणसम्पत् संभवति, [८]ननु व्रात्येऽपि संभवेत्, व्रात्योऽपि ब्राह्मणः। सोऽप्यस्तु विद्याचरणसम्पन्नः। यद्विवक्षितमर्थमाप्नोति चात्येति च तदतिसामान्यम्। यथा ब्राह्मणत्वं विद्याचरणसम्पदं क्वचिदाप्नोति, क्वचिदत्येतीति। सामान्यनिमित्तं छलं सामान्यच्छलमिति।

---

१. अस्या .... धानम् J only २. विशिष्टो विशेषशब्दस्य J ३. ॰श्चामी J
४. यत्रार्थे J ५. ॰पपन्नार्थ॰ J ६. ॰दसद्भूतार्थ॰ J ७. असद्भूतार्थ॰ J ८. ननु Om C

अस्य च प्रत्यवस्थानम्, अविवक्षितहेतुकस्य विषयानुवादः[१] प्रशंसार्थत्वाद् वाक्यस्य। [२]तदत्रासंभूतार्थकल्पनानुपपत्तिः। यथा संभवन्त्यस्मिन् क्षेत्रे शालय इति अनिराकृतमविवक्षितं च [३]बीजजन्म। [४]प्रवृत्तिविषयस्तु क्षेत्रं प्रशस्यते। [५]सोऽयं क्षेत्रानुवादः, नास्मिन् शालयो विधीयन्त[६] इति। बीजात् तु शालिनिर्वृत्तिः सती न विवक्षिता। एवं संभवति ब्राह्मणे विद्याचरणसम्पदिति सम्पद्विषयो ब्राह्मणत्वं न सम्पद्धेतुः। न चात्र हेतुर्विवक्षितः। [७]विषयानुवादस्त्वयं प्रशंसार्थत्वाद् वाक्यस्य, सति ब्राह्मणत्वे सम्पद्धेतुः समर्थ इति। विषयं च प्रशंसता वाक्येन यथाहेतुतः फलनिर्वृत्तिर्न प्रत्याख्यायते। तदेवं सति [८]वचनविघातोऽसंभूतार्थकल्पनया नोपपद्यत इति ॥१३॥

[**वा** पृः १७०; **टी** पृः ३०६; **प** पृः ३२९]

**धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम्॥१।२।१४॥**

अभिधानस्य धर्मो यथार्थप्रयोगः। धर्मविकल्पोऽन्यत्र दृष्टस्यान्यत्र प्रयोगः। तस्य निर्देशे धर्मविकल्पनिर्देशे। यथा मञ्चाः क्रोशन्तीति। अर्थसद्भावेन प्रति-षेधः, मञ्चस्थाः पुरुषाः क्रोशन्ति, न तु मञ्चाः क्रोशन्तीति।

का पुनरत्रार्थविकल्पोपपत्तिः? अन्यथा प्रयुक्तस्यान्यथा अर्थकल्पनम्[९]। भक्त्या प्रयोगे प्राधान्येन कल्पनम्। उपचारविषयं छलमुपचारच्छलम्। [१०]उपचारो नीतार्थः। सहचरणादिनिमित्तेन। अतद्भावे तद्वदभिधानमुपचार इति।

---

१. °र्थवादः J  २. °सद्भूतार्थ° J  ३. बीजम् J  ४. शालिनिवृ° J
५. क्षेत्रार्थ° J  ६. विपद्यन्ते J  ७. °र्थवादः J  ८. °सद्भूतार्थ° J
९. °र्थपरिकल्प° J  १०. द्रः न्या. सू. २.२.६२

अत्र समाधिः। प्रसिद्धे प्रयोगे वक्तुर्यथाभिप्रायं शब्दार्थयोरभ्यनुज्ञा प्रतिषेधो वा न च्छन्दतः। प्रधानभूतस्य शब्दस्य भाक्तस्य च गुणभूतस्य प्रयोग उभयोर्लोके सिद्धः। सिद्धे प्रयोगे यथा वक्तुरभिप्रायः, तथा शब्दार्थावनुज्ञेयौ प्रतिषेध्यौ वा न च्छन्दतः। यदि वक्ता प्रधानशब्दं प्रयुङ्क्ते, यथाभूतस्याभ्यनुज्ञा प्रतिषेधो वा न च्छन्दतः। अथ गुणभूतम्, तदा गुणभूतस्य। यत्र तु वक्ता गुणभूतं शब्दं प्रयुङ्क्ते, प्रधानभूतमभिप्रेत्य परः प्रतिषेधति, स्वमनीषया प्रतिषेधोऽसौ[१] भवति, न परोपालम्भ इति ॥१४॥

[**वा** पृः १७०; **टी** पृः ३०७; **प** पृः ३३०]

**वाक्छलमेवोपचारच्छलं तदविशेषात्॥१।२।१५॥**

न वाक्छलादुपचारच्छलं भिद्यते, कस्मात्? [२]तस्याप्यर्थान्तरकल्पनाया अविशेषात्। इहापि स्थान्यर्थो गुणशब्दः प्रधानशब्दः स्थानार्थ इति कल्पयित्वा प्रतिषिध्यत इति ॥१५॥

[**वा** पृः १७१; **टी** पृः ३०७; **प** पृः ३३१]

**न, तदर्थान्तरभावात्॥१।२।१६॥**

न वाक्छलमेवोपचारच्छलम्, तस्यार्थसद्भावप्रतिषेधस्यार्थान्तरभावात्। कुतः? अर्थान्तरकल्पनातः। अन्या ह्यर्थान्तरकल्पना, अन्योऽर्थसद्भावप्रतिषेध इति ॥१६॥

---

१. स्वमनीषिकाप्रतिषेधः सः J  २. अपि Om J

[वा पृः १७१; टी पृः ३०८; प पृः ३३१]

**अविशेषे वा किञ्चित्साधर्म्यादेकच्छलप्रसङ्गः ॥१।२।१७॥**

छलस्य द्वित्वमभ्यनुज्ञाय त्रित्वं प्रतिषिध्यते किञ्चित्साधर्म्यात्। यथा चायं हेतुस्त्रित्वं प्रतिषेधति, तथा द्वित्वमप्यभ्यनुज्ञातं प्रतिषेधति। विद्यते हि किञ्चित्साधर्म्यं द्वयोरपीति। अथ द्वित्वं किञ्चित्साधर्म्यान्न निवर्तते, त्रित्वमपि न निवर्त्स्यतीति ॥१७॥

॥छलप्रकरणम्॥

## [ पुरुषाशक्तिलिङ्गदोषसामान्यलक्षणप्रकरणम् ]

[वा पृः १७२; टी पृः ३०८; प पृः ३३२]

[१]अत ऊर्द्ध्वम्—

**साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः ॥१।२।१८॥**

प्रयुक्ते हि हेतौ यः प्रसङ्गो जायते [२]सा जातिः। स च प्रसङ्गः साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानमुपालम्भः प्रतिषेध इति। उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः[३] इत्यस्योदाहरणवैधर्म्येण प्रत्यवस्थानम्। तथोदाहरणवैधर्म्यात् साध्यसाधनं हेतुः[४] इत्यस्योदाहरणसाधर्म्येण प्रत्यवस्थानम्। प्रत्यनीकभावाज्जायमानोऽर्थो जातिरिति ॥१८॥

---

१. छललक्षणात् TC	२. स TC	३. न्या. सू. १।१।३४
४. द्रः तदेव, १।१।३५

[**वा** पृः १७२; **टी** पृः ३०९; **प** पृः ३३२]

**विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्॥१।२।१९॥**

विपरीता वा कुत्सिता वा प्रतिपत्तिर्विप्रतिपत्तिः। विप्रतिपद्यमानः पराजयं प्राप्नोति। निग्रहस्थानं खलु पराजयप्राप्तिः। अप्रतिपत्तिस्त्वारम्भविषयेऽनारम्भः। परेण स्थापितं वा न प्रतिषेधति, प्रतिषेधं वा नोद्धरति। असमासाच्च [1]नैते एव निग्रहस्थाने इति॥१९॥

[**वा** पृः १७२; **टी** पृः ३०९; **प** पृः ३३३]

किं पुनर्दृष्टान्तवज्जातिनिग्रहस्थानयोरभेदोऽथ[2] सिद्धान्तवद्भेद इत्यत आह—

**तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम्॥१।२।२०॥**

तस्य साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिबहुत्वम्। तयोश्च विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पान्निग्रहस्थानबहुत्वम्। नानाकल्पो विकल्पः। विविधो वा कल्पो विकल्पः। तत्राननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणमित्यप्रतिपत्तिर्निग्रहस्थानम्। शेषस्तु विप्रतिपत्तिरिति।

त इमे प्रमाणादयः पदार्था उद्दिष्टा यथोद्देशं च लक्षिता यथालक्षणं च परीक्षिष्यन्त इति त्रिविधा चास्य शास्त्रस्य प्रवृत्तिर्वेदितव्येति॥२०॥

॥पुरुषाशक्तिलिङ्गदोषसामान्यलक्षणप्रकरणम्॥

॥अवसितं सभाष्ये न्यायदर्शने प्रथमाध्यायस्य द्वितीयाह्निकम्॥

॥समाप्तः प्रथमोऽध्यायः॥

---

१. नोभे J   २. ०रभेद आहोस्वित् J

# द्वितीयाध्यायस्य प्रथमाह्निकम्

## [ संशयपरीक्षाप्रकरणम् ]

[**वा** पृः १७४; **टी** पृः ३१२; **प** पृः ३३५]

अत ऊर्ध्वं प्रमाणादिपरीक्षा। सा च

**विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः [ १।१।४१ ]**

इति। अतोऽग्रे विमर्श एव परीक्ष्यते—

**समानानेकधर्माध्यवसायादन्यतरधर्माध्यवसायाद् वा न संशयः॥२।१।१॥**

समानस्य धर्मस्याध्यवसायात् संशयो न [१]समानधर्ममात्रादिति। अथ वा समानमनयोर्धर्ममुपलभ इति धर्मधर्मिग्रहणे संशयाभाव इति। अथ वा समान-धर्माध्यवसायादर्थान्तरभूते धर्मिणि संशयोऽनुपपन्नः, न जातु रूपस्यार्थान्तरभूत-स्याध्यवसायाद् अर्थान्तरे[२] स्पर्शे संशय इति। अथ वा न अध्यवसायाद् अर्थावधारणाद् अनवधारणज्ञानं संशय उपपद्यते, कार्यकारणयोः सारूप्याभावादिति। एतेनानेकधर्माध्यवसायादिति व्याख्यातम्। अन्यतरधर्माध्यवसायाच्च संशयो न भवति, ततो ह्यन्यतरावधारणमेवेति॥१॥

[**वा** पृः १७६; **टी** पृः ३१२; **प** पृः ३३९]

**विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च॥२।१।२॥**

---

१. धर्ममात्रात् TC    २. °न्तरभूते TC

न विप्रतिपत्तिमात्रादव्यवस्थामात्राद् वा संशयः। किं तर्हि? विप्रतिपत्तिमुपलभमानस्य संशयः। एवमव्यवस्थायामपीति। अथवा, अस्त्यात्मेति एके नास्त्यात्मेति अपरे मन्यन्त इत्युपलब्धेः कथं संशयः स्यादिति। तथोपलब्धिरव्यवस्थिता अनुपलब्धिश्चाव्यवस्थितेति विभागेनाध्यवसिते संशयो नोपपद्यत इति॥२॥

[**वा** पृः १७६; **टी** पृः ३१२; **प** पृः ३३९]

**विप्रतिपत्तौ च संप्रतिपत्तेः॥२।१।३॥**

यां च विप्रतिपत्तिं भवान् संशयहेतुं मन्यते, सा संप्रतिपत्तिः। सा हि[१] द्वयोः प्रत्यनीकधर्मविषया। तत्र यदि विप्रतिपत्तेः संशयः, संप्रतिपत्तेरेव संशयः[२] इति॥३॥

[**वा** पृः १७६; **टी** पृः ३१२; **प** पृः ३३९]

**अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः॥२।१।४॥**

न संशयः। यदि तावदियमव्यवस्था आत्मन्येव व्यवस्थिता, व्यवस्थानादव्यवस्था न भवतीति अनुपपन्नः संशयः। अथाव्यवस्था आत्मनि न व्यवस्थिता एवमपि[३] अतादात्म्यादव्यवस्था न भवतीति संशयाभाव इति॥४॥

[**वा** पृः १७६; **टी** पृः ३१३; **प** पृः ३३९]

**तथात्यन्तसंशयस्तद्धर्मसातत्योपपत्तेः॥२।१।५॥**

---

१. हि Om J    २. ॰पत्तेरसंशयः J    ३. अपि Om TC

येन च[१] कल्पेन भवान् समानधर्मोपपत्तेः संशय इति मन्यते, तेन खल्वत्यन्तसंशयः प्रसज्यते। समानधर्मोपपत्तेरनुच्छेदात् संशयानुच्छेदः। [२]नायमतद्धर्मा धर्मी विमृश्यमाणो गृह्यते, सततं तु तद्धर्मा [३]एव भवतीति॥५॥

[**वा** पृः १७६; **टी** पृः ३१३; **प** पृः ३४०]

अस्य प्रतिषेधप्रपञ्चस्य संक्षेपेणोद्धारः—

**यथोक्ताध्यवसायादेव तद्विशेषापेक्षात् संशये नासंशयो नात्यन्तसंशयो वा ॥२।१।६॥**

न संशयानुत्पत्तिः संशयानुच्छेदश्च प्रसज्यते। कथम्? यत्तावत् समानधर्माध्यवसायः संशयहेतुः न समानधर्ममात्रमिति, एवमेतत्। कस्मादेवं नोच्यत इति। विशेषापेक्ष इति वचनात् तत्सिद्धेः। विशेषस्यापेक्षा आकाङ्क्षा, सा चानुपलभ्यमाने विशेषे समर्था। न चोक्तं समानधर्मापेक्ष इति। समाने च धर्मे कथमाकाङ्क्षा न भवेद् यद्ययं प्रत्यक्षः स्यात्। एतेन सामर्थ्येन विज्ञायते समानधर्माध्यवसायादिति।

उपपत्तिवचनाद् वा। समानधर्मोपपत्तेरित्युच्यते, न चान्या सद्भावसंवेदनादृते समानस्य धर्मस्योपपत्तिरस्ति। अनुपलभ्यमानसद्भावो हि समानो धर्मोऽविद्यमानवद् भवतीति।

विषयशब्देन वा विषयिणः प्रत्ययस्याभिधानम्, यथा लोके धूमेनाग्निरनुमीयत इत्युक्ते धूमदर्शनेनाग्निरनुमीयत इति विज्ञायते। कथम्? दृष्ट्वा हि धूममथाग्निमनुमिनोति नादृष्ट्वेति। न च वाक्ये दर्शनशब्दः श्रूयते, अनुजानाति च वाक्यस्यार्थप्रत्यायकत्वम्।

---

१. च Om TC　　२. न ह्ययम् C; नायम् JT Alaṃkāra　　३. एव Om TC

तेन मन्यामहे विषयशब्देन विषयिणः प्रत्ययस्याभिधानं [१]बोद्धानुजानातीति। एवमिहापि समानधर्मशब्देन समानधर्माध्यवसायमाहेति।

यथोहित्वा [२]एतत्समानमनयोर्धर्ममुपलभ इति धर्मधर्मिग्रहणे संशयाभाव इति। पूर्वदृष्टविषयमेतत्। यावहमर्थौ पूर्वमद्राक्षं तयोः समानं धर्ममुपलभे विशेषं च नोपलभ इति, कथं नु विशेषं पश्येयम्, येनान्यतरमवधारयेयमिति। न चैतत् समानधर्मोपलब्धौ धर्मधर्मिग्रहणमात्रेण निवर्तत इति।

यच्चोक्तं नार्थान्तराध्यवसायादन्यत्र संशय इति। यो हि अर्थान्तराध्यवसायमात्रं संशयहेतुमुपाददीत स एवं वाच्य इति।

यत्पुनरेतत् कार्यकारणयोः सारूप्याभावादिति, कारणस्य भावाभावयोः कार्यस्य [३]भावाभावौ कार्यकारणयोः सारूप्यम्। यस्योत्पादाद् यदुत्पद्यते, यस्य चानुत्पादाद् यन्नोत्पद्यते तत्कारणम्, कार्यमितरदित्येतत् सारूप्यम्। अस्ति च संशयकारणे संशये चैतदिति।

एतेनानेकधर्माध्यवसायादिति प्रतिषेधः परिहृतः।

यत् पुनरेतदुक्तम्, विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च[४] न संशय इति[५] पृथक्प्रवादयोर्व्याहतमर्थमुपलभे विशेषं च न जानामि नोपलभे[६] येनान्यतरमवधारयेयम्। तत् कोऽत्र विशेषः स्यात् येनैकतरमवधारयेयमिति संशयो विप्रतिपत्तिजनितोऽयं न शक्यो [७]विप्रतिपत्तिसम्प्रतिपत्तिमात्रेण निवर्तयितुमिति।

एवमुपलब्ध्यनुपलब्ध्यव्यवस्थाकृते संशये वेदितव्यमिति।

यत्पुनरेतत् विप्रतिपत्तौ च संप्रतिपत्तेरिति, विप्रतिपत्तिशब्दस्य योऽर्थस्तद-ध्यवसायो विशेषापेक्षः संशयहेतुस्तस्य च समाख्यान्तरेण न निवृत्तिः। समानेऽधि-करणे व्याहतार्थौ प्रवादौ विप्रतिपत्तिशब्दस्यार्थः। तदध्यवसायो विशेषापेक्षः

---

१. बुद्धवानु° J २. एतत् Om TC ३. तथाभावः J
४. °च्चेति तदपि समानानेकधर्माध्यवसायपरिहारतुल्यम्। J ५. न संशय इति। Om J
६. अवधारयामि for जानामि नोपलभे J ७. विप्रतिपत्त्यर्थसम्प्रति° J

संशयहेतुः। न चास्य संप्रतिपत्तिशब्दे समाख्यान्तरे योज्यमाने संशयहेतुत्वं निवर्तते, तदिदमकृतबुद्धिसम्मोहनमात्रमिति[१]।

यत्पुनरिदम् अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थाया इति संशयहेतोरर्थस्याप्रतिषेधादव्यवस्थाभ्यनुज्ञानाच्च निमित्तान्तरेण शब्दान्तरकल्पना व्यर्था। [२]शब्दान्तरकल्पनाव्यवस्था खल्वव्यवस्था न भवत्यव्यवस्थात्मनि व्यवस्थितत्वादिति। [३]नानयोपलब्ध्यनुपलब्ध्योः सदसद्विषयत्वं विशेषापेक्षं संशयहेतुर्न भवतीति प्रतिषिध्यते, यावता चाव्यवस्थात्मनि व्यवस्थिता न तावतात्मानं जहाति, तावता ह्यभ्यनुज्ञाता भवत्यव्यवस्था। एवमियं क्रियमाणापि शब्दान्तरकल्पना नार्थान्तरं[४] साधयतीति।

यत्पुनरेतत्, तथात्यन्तसंशयस्तद्धर्मसातत्योपपत्तेरिति, नायं समानधर्मादिभ्य एव संशयः। किं तर्हि? तद्विषयादध्यवसायाद् विशेषस्मृतिसहितादित्यतो नात्यन्तसंशय इति।

[५]अन्यतरधर्माध्यवसायाद् वा न संशय इति। तन्न युक्तम्, विशेषापेक्षो विमर्शः संशय इति वचनात्। विशेषश्चान्यतरधर्मो न तस्मिन्नध्यवसीयमाने विशेषापेक्षा संभवतीति॥६॥

[**वा** पृः १७९; **टी** पृः ३१४; **प** पृः ३४०]

## यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसङ्गः॥२।१।७॥

यत्र यत्र संशयपूर्विका परीक्षा शास्त्रे कथायां वा, तत्र तत्रैवं संशये परेण

---

१. °मात्र° only in J  २. येयं निमित्तान्तरेण adds J  ३. नानयोरुप° C; नानयोप° JT; अनया शब्दान्तरकल्पनया....न...प्रतिषिध्यते इति योजना तर्कवागीशसम्मता। ४. नार्थं J ५. संशय इति। तन्न Om J

प्रतिषिद्धे, समाधिर्वाच्य इति। अतः सर्वपरीक्षाव्यापित्वात् प्रथमं संशयः परीक्षित इति ॥७॥

॥संशयपरीक्षाप्रकरणम्॥

## [ प्रमाणसामान्यपरीक्षाप्रकरणम् ]

[**वा** पृः १७९; **टी** पृः ३१४; **प** पृः ३४०]

अथ प्रमाणपरीक्षा—

**प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः ॥२।१।८॥**

प्रत्यक्षादीनां प्रामाण्यं नास्ति त्रैकाल्यासिद्धेः पूर्वापरसहभावानुपपत्तेरिति ॥८॥

[**वा** पृः १७९; **टी** पृः ३१५; **प** पृः ३४२]

अस्य सामान्यवचनस्यार्थविभागः—

**पूर्वं हि प्रमाणसिद्धौ नेन्द्रियार्थसन्निकर्षात् प्रत्यक्षोत्पत्तिः ॥२।१।९॥**

गन्धादिविषयं ज्ञानं प्रत्यक्षं प्रमाणम्। तद् यदि पूर्वम्, पश्चाद् गन्धादीनां सिद्धिः, नेदं गन्धादिसन्निकर्षादुत्पद्यत इति ॥९॥

[**वा** पृः १८०; **टी** पृः ३१५; **प** पृः ३४२]

**पश्चात्सिद्धौ न प्रमाणेभ्यः प्रमेयसिद्धिः ॥२।१।१०॥**

असति प्रमाणे केन प्रमीयमाणोऽर्थः प्रमेयः[१] स्यात्? प्रमाणेन खलु प्रमीयमाणोऽर्थः प्रमेयमिदमित्येतत्सिध्यतीति ॥१०॥

[**वा** पृः १८०; **टी** पृः ३१५; **प** पृः ३४३]

**युगपत्सिद्धौ प्रत्यर्थनियतत्वात् क्रमवृत्तित्वाभावो बुद्धीनाम् ॥२।१।११॥**

यदि प्रमाणं च प्रमेयं च युगपद् भवतः, एवमपि[२] गन्धादिषु इन्द्रियार्थेषु ज्ञानानि प्रत्यर्थनियतानि युगपत् सम्भवन्तीति ज्ञानानां प्रत्यर्थनियतत्वात् क्रमवृत्तित्वाभावः[३]। या इमा बुद्धयः क्रमेणार्थेषु वर्तन्ते तासां क्रमवृत्तित्वं न संभवतीति[४]। व्याघातश्च,

**युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् [ १।१।१६ ]**

इति। एतावांश्च प्रमाणप्रमेययोः सद्भावविषयः। स चानुपपन्न इति। तस्मात् प्रत्यक्षादीनां प्रमाणत्वं न सम्भवतीति।

अत्र समाधिः—उपलब्धिहेतोरुपलब्धिविषयस्य चार्थस्य पूर्वापरसहभावानियमाद् यथादर्शनं विभागवचनम्। क्वचिदुपलब्धिहेतुः पूर्वम्, पश्चादुपलब्धिविषयः, यथा आदित्यस्य प्रकाशः उत्पद्यमानानाम्। क्वचित् पूर्वमुपलब्धिविषयः पश्चादुपलब्धिहेतुः। यथा अवस्थितानां प्रदीपः। क्वचिदुपलब्धिहेतुरुपलब्धिविषयश्च सह भवतः। यथा धूमेनाग्नेर्ग्रहणमिति। उपलब्धिहेतुश्च प्रमाणं प्रमेयं तूपलब्धिविषयः। एवं प्रमाणप्रमेययोः पूर्वापरसहभावेऽनियते यथार्थो दृश्यते तथा विभज्य वक्तव्य[५] इति तत्रैकान्तेन प्रतिषेधानुपपत्तिः। सामान्येन खलु विभज्य प्रतिषेध उक्त इति।

१. प्रमेयम् J  २. एवं सति J  ३. ०भावो बुद्धीनाम् J  ४. भवेत् J  ५. वचनीयः TC

समाख्याहेतोस्त्रैकाल्ययोगात् तथाभूता समाख्या। यत् पुनरिदं पश्चात्सिद्धावसति प्रमाणे प्रमेयं न सिध्यतीति, प्रमाणेन हि प्रमीयमाणोऽर्थः प्रमेयमिति विज्ञायत इति। प्रमाणमित्येतस्याः समाख्याया उपलब्धिहेतुत्वं निमित्तम्, तस्य त्रैकाल्ययोगः। उपलब्धिमकार्षीत्, उपलब्धिं करोति, उपलब्धिं करिष्यतीति समाख्याहेतोस्त्रैकाल्ययोगात् समाख्यापि तथाभूता। प्रमितोऽनेनार्थः प्रमीयते प्रमास्यत इति च प्रमाणम्। प्रमितम्, प्रमीयते, प्रमास्यत इति च प्रमेयम्। एवं सति भविष्यत्यस्मिन् हेतुत उपलब्धिः, प्रमास्यतेऽयमर्थः, प्रमेयमिदमिति[1] सर्वं [2]सिद्धं भवतीति। त्रैकाल्यानभ्यनुज्ञाने च व्यवहारानुपपत्तिः। यश्चैवं नाभ्यनुजानीयात् तस्य पाचकमानय पक्ष्यति, लावकमानय लविष्यतीति व्यवहारो नोपपद्यत इति।

**प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः**

इत्येवमादि वाक्यं प्रमाणप्रतिषेधः। तत्रायम् इदं प्रष्टव्यः—अथानेन प्रतिषेधेन भवता किं क्रियत इति? किं सम्भवो निवर्त्यते, अथासम्भवो ज्ञाप्यत इति। तद् यदि सम्भवो निवर्त्यते, सति सम्भवे प्रत्यक्षादीनां प्रतिषेधानुपपत्तिः। अथासम्भवो ज्ञाप्यते, प्रमाणलक्षणं प्राप्तस्तर्हि प्रतिषेधः, प्रमाणासम्भवस्योपलब्धिहेतुत्वादिति ॥११॥

[**वा** पृः १८२; **टी** पृः ३१७; **प** पृः ३४३]

किं चातः?

## त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिः ॥२।१।१२॥

अस्य तु विभागः। पूर्वं हि प्रतिषेधसिद्धावसति प्रतिषेध्ये किमनेन प्रतिषिध्यते? पश्चात्सिद्धौ प्रतिषेध्यासिद्धिः प्रतिषेधाभावादिति। युगपत्सिद्धौ प्रतिषेध्यसिद्ध्य-

१. °मिदमित्येतत् सर्वं भवति TC　　२. सिद्धं Om TC

भ्यनुज्ञानादनर्थकः प्रतिषेध इति। प्रतिषेधलक्षणे च वाक्येऽनुपपद्यमाने सिद्धं प्रत्यक्षादीनां प्रमाणत्वमिति ॥१२॥

[**वा** पृः १८४; **टी** पृः ३१७; **प** पृः ३४३]

**सर्वप्रमाणप्रतिषेधाच्च प्रतिषेधानुपपत्तिः ॥२।१।१३॥**

[१]कथम्? त्रैकाल्यासिद्धेरित्यस्य हेतोर्यद्युदाहरणमुपादीयते हेत्वर्थस्य साधकत्वं दृष्टान्ते प्रदर्शयितव्यमिति। न च[२] तर्हि प्रत्यक्षादीनामप्रामाण्यम्। अथ प्रत्यक्षादीनामप्रामाण्यम्, उपादीयमानमप्युदाहरणं नार्थं साधयिष्यतीति सोऽयं सर्वप्रमाणव्याहतहेतुरहेतुः।

**सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः [ १।२।६ ]**

इति। वाक्यार्थो ह्यस्य सिद्धान्तः। स च वाक्यार्थः प्रत्यक्षादीनि नार्थं साधयन्तीति। इदं चावयवानामुपादानमर्थस्य साधनायेति। अथ नोपादीयते, अप्रदर्शितं हेत्वर्थस्य दृष्टान्तेन साधकत्वमिति [३]प्रतिषेधो नोपपद्यते [४]हेतुत्वासिद्धेरिति ॥१३॥

[**वा** पृः १८५; **टी** पृः ३१८; **प** पृः ३४४]

**तत्प्रामाण्ये वा न सर्वप्रमाणविप्रतिषेधः ॥२।१।१४॥**

प्रतिषेधलक्षणे स्ववाक्ये तेषामवयवाश्रितानां प्रत्यक्षादीनां प्रामाण्येऽभ्यनुज्ञायमाने परवाक्येऽप्यवयवाश्रितानां [५]प्रत्यक्षादीनां प्रामाण्यं प्रसज्यते, [६]अविशेषा-

---

१. कथम् introduces the Sūtra 2.1.13 C २. च Om J ३. निषेधो TC
४. हेत्वर्थासि॰ J ५. प्रत्यक्षादीनां only in J ६. विशेषहेत्वभावात् J

दिति। एवं च न सर्वाणि प्रमाणानि प्रतिषिध्यन्त इति। विप्रतिषेध इति वीत्ययमुपसर्गः सम्प्रतिपत्त्यर्थे, न व्याघाते [१]तदर्थासंभवादिति ॥१४॥

[**वा** पृः १८५; **टी** पृः ३१९; **प** पृः ३४४]

## त्रैकाल्याप्रतिषेधश्च शब्दादातोद्यसिद्धिवत् तत्सिद्धेः ॥२।१।१५॥

किमर्थं पुनरिदमुच्यते? [२]पूर्वोक्तार्थनिबन्धनार्थम्। यत्तावत् पूर्वमुक्तमुपलब्धिहेतोरुपलब्धिविषयस्य चार्थस्य पूर्वापरसहभावानियमाद् यथादर्शनं विभागवचनमिति [३]तस्येतः समुत्थानं यथा विज्ञायेत। अनियमदर्शी खल्वयमृषिर्नियमेन प्रतिषेधं प्रत्याचष्टे—त्रैकाल्यस्य चायुक्तः प्रतिषेध इति। तत्रैकां विधामुदाहरति, शब्दादातोद्यसिद्धिवदिति। यथा पश्चात्सिद्धेन शब्देन पूर्वसिद्धमातोद्यमनुमीयते, साध्यं चातोद्यम्, साधनं च शब्दः, [४]व्यवहिते ह्यातोद्ये स्वनतोऽनुमानं भवतीति वीणा वाद्यते वेणुः पूर्यत इति स्वनविशेषेणातोद्यविशेषं प्रतिपद्यते, तथा पूर्वसिद्धमुपलब्धिविषयं पश्चात्सिद्धेनोपलब्धिहेतुना प्रतिपद्यत इति। निदर्शनार्थत्वाच्चास्य शेषयोर्विधयोर्यथोक्तमुदाहरणं वेदितव्यमिति।

कस्मात् पुनरिह तन्नोच्यते? पूर्वोक्तमुपपाद्यत इति। सर्वथा तावदयमर्थः प्रकाशयितव्यः। स इह वा प्रकाश्येत तत्र वा, न कश्चिद् विशेष इति ॥१५॥

[**वा** पृः १८६; **टी** पृः ३१९; **प** पृः ३४५]

प्रमाणं प्रमेयमिति चेयं समाख्या समावेशेन प्रवर्तते समाख्यानिमित्तवशात्। समाख्यानिमित्तं तूपलब्धिसाधनं प्रमाणम्, उपलब्धिविषयश्च प्रमेयमिति। यदा

---

१. अर्थाभावात् TC, J margin २. °क्तनिबन्ध° TC ३. तदितः TC
४. अन्तर्हिते TC

चोपलब्धिविषयः [१]कस्यचिदुपलब्धिसाधनं भवति, तदा प्रमाणमिति च प्रमेयमिति चैकोऽर्थोऽभिधीयते। अस्यार्थस्यावद्योतनार्थमिदमुच्यते—

**प्रमेया च तुलाप्रामाण्यवत्॥२।१।१६॥**

गुरुत्वपरिमाणज्ञानसाधनं तुलाप्रमाणम्, ज्ञानविषयो गुरुद्रव्यं सुवर्णादि प्रमेयम्। यदा तु सुवर्णादिना तुलान्तरं व्यवस्थाप्यते, तदा तुलान्तरप्रतिपत्तौ सुवर्णादि साधनं प्रमाणं तुलान्तरं प्रमेयमिति भवति[२]। एवमनवयवेन तन्त्रार्थ उद्दिष्टो वेदितव्यः। आत्मा तावदुपलब्धिविषयत्वात् प्रमेये परिपठितः, उपलब्धौ स्वातन्त्र्यात् प्रमाता, बुद्धिरुपलब्धिसाधनत्वात् प्रमाणम्, उपलब्धिविषयत्वात् प्रमेयम्, उभयाभावात् तु प्रमितिः। एवमर्थविशेषे समाख्यासमावेशो योज्यः। तथा च लोके[३] कारकशब्दा निमित्तवशात् समावेशेन वर्तन्त इति। वृक्षस्तिष्ठतीति स्वस्थितौ वृक्षः स्वातन्त्र्यात् कर्ता। वृक्षं पश्यतीति दर्शनेनाप्तुमिष्यमाणतमत्वात् कर्म। वृक्षेण चन्द्रमसं ज्ञापयतीति ज्ञापकस्य साधकतमत्वात् करणम्। वृक्षायोदकमासिञ्चतीति आसिच्यमानेनोदकेन वृक्षमभिप्रैतीति सम्प्रदानम्। वृक्षात् पर्णं पततीति

**ध्रुवमपायेऽपादानम् [पा. सू. १।४।२४]**

इत्यपादानम्। वृक्षे वयांसि सन्तीति

**आधारोऽधिकरणम् [पा. सू. १।४।४५]**

इत्यधिकरणम्। एवं च सति न [४]द्रव्यमात्रं कारकम्, न क्रियामात्रम्। किं तर्हि? क्रियासाधनं क्रियाविशेषयुक्तं कारकम्। यत्क्रियासाधनं स्वतन्त्रं स कर्ता, न द्रव्यमात्रं न क्रियामात्रम्। क्रियया व्याप्तुमिष्यमाणतमं कर्म, न द्रव्यमात्रं न क्रियामात्रम्। एवं साधकतमादिष्वपि। एवं च कारकार्थान्वाख्यानं यथैव उपपत्तित

---

१. क्वचिद् J　　२. भवति adds J　　३. लोके Om TC
४. द्रव्यं J; द्रव्यमात्रं TC, Pañjikā

एवं लक्षणतः कारकान्वाख्यानमपि न द्रव्यमात्रे न क्रियायां वा। किं तर्हि? क्रियासाधने क्रियाविशेषयुक्त इति। कारकशब्दश्चायं प्रमाणं प्रमेयमिति। स च कारकधर्मं न हातुमर्हतीति ॥१६॥

[**वा** पृः १९१; **टी** पृः ३२३; **प** पृः ३४९]

अस्ति भोः, कारकशब्दानां निमित्तवशात् समावेशः। प्रत्यक्षादीनि च प्रमाणानि, उपलब्धिहेतुत्वात्। प्रमेयं चोपलब्धिविषयत्वात्। संवेद्यानि च प्रत्यक्षादीनि। प्रत्यक्षेणोपलभे, अनुमानेनोपलभे, उपमानेनोपलभे, आगमेनोपलभे, प्रत्यक्षं मे ज्ञानम्, आनुमानिकं मे ज्ञानम्, औपमानिकं मे ज्ञानम्, आगमिकं मे ज्ञानमिति विशेषा गृह्यन्ते। लक्षणतश्च ज्ञाप्यमानानि ज्ञायन्ते विशेषेण

**इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानम् [ १।१।४ ]**

इत्येवमादिना। सेयमुपलब्धिः प्रत्यक्षादिविषया किं प्रमाणान्तरतोऽथान्तरेण प्रमाणान्तरमसाधनेति[1]? कश्चात्र विशेषः?

**प्रमाणतः सिद्धेः प्रमाणानां प्रमाणान्तरसिद्धिप्रसङ्गः ॥२।१।१७॥**

यदि प्रत्यक्षादीनि प्रमाणेनोपलभ्यन्ते, तदा[2] येन प्रमाणेनोपलभ्यन्ते तत्प्रमाणान्तरमस्तीति प्रमाणान्तरसद्भावः प्रसज्यत इति अनवस्थामाह तस्याप्यन्येन[3] तस्याप्यन्येनेति[4]। न चानवस्था शक्यानुज्ञातुमनुपपत्तेरिति ॥१७॥

[**वा** पृः १९१; **टी** पृः ३२४; **प** पृः ३५०]

अस्तु तर्हि प्रमाणान्तरमन्तरेण[5] निःसाधनेति?

---

१. ०न्तरं निःसाधनेति J २. तदा J ३. ०प्यन्यत् J ४. ०प्यन्यदिति J
५. प्रमाणान्तरेण विना J

## तद्विनिवृत्तेर्वा प्रमाणसिद्धिवत् प्रमेयसिद्धिः ॥२।१।१८॥

यदि प्रत्यक्षाद्युपलब्धौ प्रमाणान्तरं निवर्तते, आत्माद्युपलब्धावपि [१]तर्हि प्रमाणान्तरं निवर्त्स्यर्त्यविशेषात् ॥१८॥

[**वा** पृः १९१; **टी** पृः ३२५; **प** पृः ३५०]

एवं च सर्वप्रमाणविलोप इत्यत आह—

## न, प्रदीपप्रकाशसिद्धिवत् तत्सिद्धेः ॥२।१।१९॥

यथा प्रदीपप्रकाशः प्रत्यक्षाङ्गत्वाद् दृश्यदर्शने प्रमाणम्, स च प्रत्यक्षान्तरेण चक्षुषः सन्निकर्षेण गृह्यते, [२]प्रदीपभावाभावयोर्दर्शनस्य तथाभावाद् [३]दर्शनहेतुरनुमीयते। तमसि प्रदीपमुपाददीथा इत्याप्तोपदेशेनापि प्रतिपद्यते। एवं प्रत्यक्षादीनां यथादर्शनं प्रत्यक्षादिभिरेवोपलब्धिः। इन्द्रियाणि तावत् स्वविषयग्रहणेनैवानुमीयन्ते। अर्थाः प्रत्यक्षतो गृह्यन्ते। इन्द्रियार्थसन्निकर्षास्त्वावरणेन लिङ्गेनानुमीयन्ते। इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमात्ममनसोः संयोगविशेषादात्मसमवायाच्च सुखादिवद् गृह्यते। एवं प्रमाणविशेषोऽपि विभज्य वचनीयः। यथा च दृश्यः सन् प्रदीपप्रकाशो दृश्यान्तराणां दर्शनहेतुरिति दृश्यदर्शनव्यवस्थां लभते, एवं प्रमेयं सत् किञ्चिदर्थजातमुपलब्धिहेतुत्वात् प्रमाणप्रमेयव्यवस्थां लभते। सेयं प्रत्यक्षादिभिरेव प्रत्यक्षादीनां यथादर्शनमुपलब्धिर्न प्रमाणान्तरतो न च प्रमाणमन्तरेण[४] निःसाधनेति।

तेनैव तस्याग्रहणमिति चेत्? न, अर्थभेदस्य लक्षणसामान्यात्। प्रत्यक्षादीनां प्रत्यक्षादिभिरेव ग्रहणमित्ययुक्तम्, अन्येन हि अन्यस्य ग्रहणं दृष्टमिति। न,

---

१. तर्हि प्रमाणं J　२. °प्रदीप° Om J, Pañjikā　३. °हेतुरित्यनु° J
४. प्रमाणान्तरमन्तरेणैव J

अर्थभेदस्य लक्षणसामान्यात्। प्रत्यक्षलक्षणेनानेकोऽर्थः संगृहीतः। तत्र केनचित् कस्यचिद् ग्रहणमित्यदोषः। एवनुमानादिष्वपीति। यथोद्धृतेनोदकेनाशयस्थस्य ग्रहणमिति।

ज्ञातृमनसोश्च दर्शनात्। अहं सुखी अहं दुःखी चेति तेनैव ज्ञात्रा तस्यैव ग्रहणं दृश्यते।

**युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्[ १।१।१६ ]**

इति तेनैव मनसा तस्यैव चानुमानं दृश्यते। ज्ञातुर्ज्ञेयस्य चाभेदो ग्रहणस्य ग्राह्यस्य चाभेद इति।

निमित्तभेदोऽत्रेति चेत्, समानम्। न निमित्तान्तरेण विना ज्ञाता आत्मानं जानीते। न च निमित्तान्तरेण विना मनसा मनो गृह्यत इति समानमेतत्, प्रत्यक्षादिभिः प्रत्यक्षादीनां ग्रहणमित्यत्राप्यर्थभेदो [१]न गृह्यत इति।

प्रत्यक्षादीनां चाविषयस्यानुपपत्तेः। यदि स्यात् किञ्चिदर्थजातं प्रत्यक्षादीनामविषयः यत् प्रत्यक्षादिभिर्न शक्यं ग्रहीतुम्, तस्य ग्रहणाय प्रमाणान्तरमुपादीयेत[२], तत्तु न शक्यं केनचिदुपपादयितुमिति प्रत्यक्षादीनां [३]यथादर्शनमेवेदं सच्चासच्च सर्वं विषय इति॥१९॥

[**वा** पृः १९३; **टी** पृः ३२५; **प** पृः ३५०]

**केचित्** तु दृष्टान्तमपरिगृहीतं हेतुना विशेषहेतुमन्तरेण [४]साध्यसाधनायोपाददते। यथा प्रदीपप्रकाशः प्रदीपान्तरप्रकाशमन्तरेण गृह्यते, तथा प्रमाणानि प्रमाणान्तरमन्तरेण गृह्यन्त इति। स चायम्[५]

**क्वचिन्निवृत्तिदर्शनादनिवृत्तिदर्शनाच्च क्वचिदनेकान्तः॥२।१।२०॥**

---

१. न Om JC var  २. ०दीयते J  ३. यथादर्शनम् Om J  ४. साध्य० Om J  ५. केचित्..........चायम् placed after the Sūtra C

यथा [१]चायं प्रसङ्गो निवृत्तिदर्शनात् प्रमाणसाधनायोपादीयते, एवं प्रमेयसाधनायाप्युपादेयोऽविशेषहेतुत्वात्[२]। यथा च स्थाल्यादिरूपग्रहणे प्रदीपप्रकाशः प्रमेयसाधनायोपादीयते, एवं प्रमाणसाधनायाप्युपादेयो विशेषहेत्वभावात्। सोऽयं विशेषहेतुपरिग्रहमन्तरेण दृष्टान्त एकस्मिन् पक्षे उपादेयो न प्रतिपक्ष इत्यनेकान्तः। एकस्मिंश्च पक्षे दृष्टान्त [३]उपादेयो न प्रतिदृष्टान्त इत्यनेकान्तो विशेषहेत्वभावादिति।

**विशेषहेतुपरिग्रहे तु सति उपसंहाराभ्यनुज्ञानादप्रतिषेधः। विशेषहेतुपरिगृहीतस्तु दृष्टान्त एकस्मिन् पक्षे उपसंह्रियमाणो न शक्योऽननुज्ञातुम्। एवं च सति अनेकान्त इत्ययं प्रतिषेधो न** [४]**भवति।**

प्रत्यक्षादीनां प्रत्यक्षादिभिरुपलब्धावनवस्थेति चेत्? [५]तन्न, [६]संवित्तिविषयनिमित्तानामुपलब्ध्या व्यवहारोपपत्तेः। प्रत्यक्षेणार्थमुपलभे, अनुमानेनार्थमुपलभे, उपमानेनार्थमुपलभे, आगमेनार्थमुपलभ इति, प्रत्यक्षं मे ज्ञानमानुमानिकं मे ज्ञानमौपमानिकं मे ज्ञानमागमिकं मे ज्ञानमिति [७]संवित्तिविषयं संवित्तिनिमित्तं चोपलभमानस्य धर्मार्थसुखापवर्गप्रयोजनस्तत्प्रत्यनीकपरिवर्जनप्रयोजनश्च व्यवहार उपपद्यते। सोऽयं तावत्येव निवर्तते। न चास्ति व्यवहारान्तरमनवस्थासाधनीयं येन प्रयुक्तोऽनवस्थामुपाददीतेति ॥२० ॥

॥प्रमाणसामान्यपरीक्षाप्रकरणम्॥

# [ प्रत्यक्षलक्षणपरीक्षाप्रकरणम् ]

[**वा** पृः १९४; **टी** पृः ३२७; **प** पृः ३५१]

सामान्येन प्रमाणानि परीक्ष्य विशेषेण [८]परीक्ष्यन्ते। तत्र,

---

१. च Om J   २. विशेषहेत्वभावात् J   ३. उपा...दृष्टान्त° JC var   ४. भवेत् J
५. तत् adds J   ६. संविद्विष° TC   ७. संविद्विष° TC   ८. परिक्षिष्यन्ते J

**प्रत्यक्षलक्षणानुपपत्तिरसमग्रवचनात्॥२।१।२१॥**

आत्ममनःसन्निकर्षो हि कारणान्तरं नोक्तमिति। न चासंयुक्ते द्रव्ये संयोगजन्यस्य गुणस्योत्पत्तिरिति ज्ञानोत्पत्तिदर्शनादात्ममनःसन्निकर्षः कारणम्। मनःसन्निकर्षानपेक्षस्य चेन्द्रियार्थसन्निकर्षे ज्ञानकारणे[१] युगपदुत्पद्येरन् [२]बुद्धय इति मनःसन्निकर्षोऽपि कारणमिति। तदिदं सूत्रं पुरस्तात् कृतभाष्यम्॥२१॥

[**वा** पृः १९५; **टी** पृः ३२७; **प** पृः ३५२]

**नात्ममनसोः सन्निकर्षाभावे प्रत्यक्षोत्पत्तिः॥२।१।२२॥**

आत्ममनसोः सन्निकर्षाभावे नोत्पद्यते प्रत्यक्षमिन्द्रियार्थसन्निकर्षाभाववदिति॥२२॥

[**वा** पृः १९५; **टी** पृः ३२८; **प** पृः ३५२]

सति चेन्द्रियार्थसन्निकर्षे ज्ञानोत्पत्तिदर्शनात् कारणभावं ब्रुवतः—

**दिग्देशकालाकाशेष्वप्येवं प्रसङ्गः॥२।१।२३॥**

दिगादिषु सत्सु ज्ञानभावात् तान्यपि [३]ज्ञानकारणानीति। अकारणभावेऽपि ज्ञानोत्पत्तिर्दिगादिसन्निधेरवर्जनीयत्वात्। [४]यद्यप्यकारणं दिगादीनि ज्ञानोत्पत्तौ [५]तथापि सत्सु दिगादिषु ज्ञानेन भवितव्यम्। न हि दिगादीनां सन्निधिः शक्यः परिवर्ज-

---

१. °कर्षस्य....कारणत्वे TC २. प्रत्यया J ३. ज्ञान° J
४. यदापि TC ५. तदापि TC

यितुमिति। तत्र कारणभावे हेतुवचनम्, एतस्माद्धेतोर्दिगादीनि ज्ञानकारणानीति ॥२३॥

[**वा** पृः १९६; **टी** पृः ३२९; **प** पृः ३५४]

आत्ममनःसन्निकर्षस्तर्ह्युपसङ्ख्येय इति। तत्रेदमुच्यते—

**ज्ञानलिङ्गत्वादात्मनो नानवरोधः॥२।१।२४॥**

ज्ञानमात्मलिङ्गं तद्गुणत्वात्। न चासंयुक्ते द्रव्ये संयोगजस्य गुणस्योत्पत्तिरस्तीति॥२४॥

[**वा** पृः १९७; **टी** पृः ३२९; **प** पृः ३५४]

**तदयौगपद्यलिङ्गत्वाच्च न मनसः॥२।१।२५॥**

अनवरोध इत्यनुवर्तते

**युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्** [ १।१।१६ ]

इत्युच्यमाने सिध्यत्येव मनःसन्निकर्षापेक्ष इन्द्रियार्थसन्निकर्षो ज्ञानकारणमिति॥२५॥

[**वा** पृः १९७; **टी** पृः ३३०; **प** पृः ३५५]

**प्रत्यक्षनिमित्तत्वाच्चेन्द्रियार्थयोः सन्निकर्षस्य स्वशब्देन वचनम्॥२।१।२६॥**

प्रत्यक्षानुमानोपमानशब्दानां निमित्तमात्ममनःसन्निकर्षः। प्रत्यक्षस्यैवेन्द्रियार्थसन्निकर्ष इत्यसमानः। असमानत्वात् तस्य ग्रहणम्॥२६॥

[**वा** पृ: १९८; **टी** पृ: ३३०; **प** पृ: ३५५]

**सुप्तव्यासक्तमनसां चेन्द्रियार्थयोः सन्निकर्षनिमित्तत्वात्॥२।१।२७॥**

इन्द्रियार्थसन्निकर्षस्य ग्रहणं नात्ममनसोः सन्निकर्षस्येति। एकदा खल्वयं प्रबोधकालं प्रणिधाय सुप्तः प्रणिधानवशात् प्रबुध्यते। यदा तु तीव्रौ ध्वनिस्पर्शौ प्रबोधकारणं भवतस्तदा प्रसुप्तस्येन्द्रियसन्निकर्षनिमित्तं प्रबोधज्ञानमुत्पद्यते[1]। तत्र न ज्ञातुर्मनसश्च सन्निकर्षस्य प्राधान्यं भवतीति। किं तर्हि? इन्द्रियार्थयोः सन्निकर्षस्य प्राधान्यम्[2]। न ह्यात्मा जिज्ञासमानः प्रयत्नेन मनस्तदा[3] प्रेरयतीति।

एकदा खल्वयं विषयान्तरे व्यासक्तमनाः सङ्कल्पवशाद् विषयान्तरं जिज्ञासमानः प्रयत्नप्रेरितेन मनसा इन्द्रियं संयोज्य तद्विषयान्तरं जानीते। यदा तु खल्वस्य निःसङ्कल्पस्य निर्जिज्ञासस्य च व्यासक्तमनसो बाह्यविषयोपनिपातनाज् ज्ञानमुत्पद्यते, तदेन्द्रियार्थसन्निकर्षस्य प्राधान्यम्। न ह्यत्रात्मा[4] जिज्ञासमानः प्रयत्नेन मनः प्रेरयतीति। प्राधान्याच्चेन्द्रियार्थसन्निकर्षस्य ग्रहणं कार्यम्। [5]गुणभावाद् नात्ममनसोः सन्निकर्षस्येति॥२७॥

[**वा** पृ: १९८; **टी** पृ: ३३१; **प** पृ: ३५५]

प्राधान्ये च हेत्वन्तरम्—

**तैश्चापदेशो ज्ञानविशेषाणाम्॥२।१।२८॥**

तैरिन्द्रियैरर्थैश्च व्यपदिश्यन्ते ज्ञानविशेषाः। कथम्? घ्राणेन जिघ्रति, चक्षुषा

१. उत्पद्यते Om J २. प्राधान्यम् Om TC ३. तदा Om J ४. ०त्रासौ TC
५. गुणत्वात् TC

पश्यति, रसनया रसयतीति, घ्राणविज्ञानं चक्षुर्विज्ञानं रसनाविज्ञानमिति। गन्धविज्ञानं रूपविज्ञानं रसविज्ञानमिति च। इन्द्रियविषयविशेषाच्च पञ्चधा बुद्धिर्भवति। अतश्च[१] प्राधान्यमिन्द्रियार्थसन्निकर्षस्येति ॥२८॥

[**वा** पृः १९८; **टी** पृः ३३१; **प** पृः ३५६]

यदुक्तमिन्द्रियार्थसन्निकर्षग्रहणं कार्यम्, नात्ममनसोः सन्निकर्षस्येति, कस्मात्?

**सुप्तव्यासक्तमनसामिन्द्रियार्थयोः सन्निकर्षस्य ज्ञाननिमित्तत्वात्**

**[ २।१।२७ ]**

इति। सोऽयम्—

**व्याहतत्वादहेतुः ॥२।१।२९॥**

यदि तावत् क्वचिदात्ममनसोः सन्निकर्षस्य ज्ञानकारणत्वं नेष्यते, तदा[२]—

**युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् [ १।१।१६ ]**

इति व्याहन्येत[३]। नेदानीं मनसः सन्निकर्षमिन्द्रियार्थसन्निकर्षोऽपेक्षते। मनःसंयोगानपेक्षायां च युगपज्ज्ञानोत्पत्तिप्रसङ्गः। अथ मा भूद् व्याघात इति सर्वज्ञानानामात्ममनसोः सन्निकर्षः कारणमिष्यते तदवस्थमेवेदं भवति, ज्ञानकारणत्वादात्ममनसोः सन्निकर्षस्य ग्रहणं कार्यमिति ॥२९॥

[**वा** पृः १९९; **टी** पृः ३३१; **प** पृः ३५६]

**नार्थविशेषप्राबल्यात् ॥२।१।३०॥**

---

१. च Om TC २. तदा Om J ३. व्याहन्यते J

नास्ति व्याघातः। न ह्यात्ममनःसन्निकर्षस्य ज्ञानकारणत्वं व्यभिचरति। इदं तु[१] इन्द्रियार्थसन्निकर्षस्य [२]प्राधान्यमुपादीयते। अर्थविशेषप्राबल्याद्धि सुप्त-व्यासक्तमनसां ज्ञानोत्पत्तिरेकदा भवति। अर्थविशेषः कश्चिदेवेन्द्रियार्थः। तस्य प्राबल्यं तीव्रतापटुते। तच्चार्थविशेषप्राबल्यमिन्द्रियार्थसन्निकर्षविषयम्, नात्ममनसोः सन्निकर्षविषयम्। तस्मादिन्द्रियार्थसन्निकर्षः प्रधानमिति।

असति सङ्कल्पे प्रणिधाने चासति सुप्तव्यासक्तमनसां यदिन्द्रियार्थसन्नि-कर्षादुत्पद्यते ज्ञानं तत्र मनःसंयोगोऽपि कारणमिति मनसि क्रियाकारणं वाच्यमिति। यथैव ज्ञातुः खल्वयमिच्छाजनितः प्रयत्नो मनसः प्रेरक आत्मगुणः, एवमात्मनि गुणान्तरं [३]सर्वार्थं सर्वस्य साधकं प्रवृत्तिदोषजनितमस्ति, येन प्रेरितं मन इन्द्रियेण [४]संबध्यते। तेन ह्यप्रेर्यमाणे मनसि संयोगाभावाज् ज्ञानानुत्पत्तौ सर्वार्थतास्य निवर्तते। एषितव्यं चास्य गुणान्तरस्य द्रव्यगुणकर्मकारणत्वम्, अन्यथा हि चतुर्विधानामणूनां भूतसूक्ष्माणां मनसां च ततोऽन्यस्य क्रियाहेतोरसंभवात् शरीरेन्द्रियविषयाणामनुत्पत्तिप्रसङ्ग इति ॥३०॥

॥प्रत्यक्षलक्षणपरीक्षाप्रकरणम्॥

## [ प्रत्यक्षस्यानुमानत्वपरीक्षाप्रकरणम् ]

[**वा** पृः २००; **टी** पृः ३३२; **प** पृः ३५६]

**प्रत्यक्षमनुमानमेकदेशग्रहणादुपलब्धेः ॥२।१।३१॥**

यदिदमिन्द्रियार्थसन्निकर्षादुत्पद्यते ज्ञानं वृक्ष इति, एतत् किल प्रत्यक्षम्, तत्

१. इदं तु J    २. प्राबल्यम् J    ३. सर्वार्थं adds J    ४. संयुज्यते J

खल्वनुमानमेव। कस्मात्? एकदेशग्रहणाद् वृक्षस्योपलब्धेः। अर्वाग्भागमयं गृहीत्वा वृक्षमुपलभते। न चैकदेशो वृक्षः। तत्र यथा धूमं गृहीत्वा वह्निमनुमिनोति [१]तादृगेव तद् भवति। किं पुनरत्र[२] गृह्यमाणादेकदेशादर्थान्तरमनुमेयं मन्यसे? [३]अवयवसमूहपक्षे अवयवान्तराणि। [४]द्रव्यान्तरोत्पत्तिपक्षे तानि चावयवी चेति। अवयवसमूहपक्षे तावदेकदेशग्रहणाद् वृक्षबुद्धेरभावः, नागृह्यमाणमेकदेशान्तरं वृक्षो गृह्यमाणैकदेशवदिति। अथैकदेशग्रहणादेकदेशान्तरानुमाने समुदाय-प्रतिसन्धानात् तत्र वृक्षबुद्धिः? न तर्हि वृक्षबुद्धिरनुमानमेवं सति [५]भवतीति। द्रव्यान्तरोत्पत्तिपक्षे नावयव्यनुमेयः, अस्यैकदेशसम्बद्धस्याग्रहणात्, ग्रहणे चाविशेषादनुमेयत्वाभावः। तस्माद् वृक्षबुद्धिरनुमानं न भवतीति॥३१॥

[**वा** पृः २०४; **टी** पृः ३३४; **प** पृः ३५७]

एकदेशग्रहणं चाश्रित्य प्रत्यक्षस्यानुमानत्वमुपपाद्यते। तच्च—

**न, प्रत्यक्षेण यावत्तावदप्युपलम्भात्॥२।१।३२॥**

न प्रत्यक्षमनुमानम्। कस्मात्? प्रत्यक्षेणैवोपलम्भात्। यत् तदेकदेशग्रहणमनु-मानत्वेन[६] आश्रीयते प्रत्यक्षेणासावुपलम्भः। न चोपलम्भो निर्विषयोऽस्ति। यावच्चार्थजातं तस्य विषयस्तावदभ्यनुज्ञायमानं प्रत्यक्षस्य व्यवस्थापकं भवति।

किं पुनस्ततोऽन्यदर्थजातम्? अवयवी समुदायो वा? न चैकदेशग्रहणमनुमानं भावयितुं शक्यं हेत्वभावादिति।

अन्यथापि च प्रत्यक्षस्य नानुमानत्वप्रसङ्गस्तत्पूर्वकत्वात्। प्रत्यक्षपूर्वकम-नुमानम्। सम्बद्धावग्निधूमौ प्रत्यक्षतो दृष्टवतो धूमप्रत्यक्षदर्शनादग्नावनुमानं भवति।

---

१. तादृगेतत् J  २. अत्र only in J  ३. बौद्धपक्षे इत्यर्थः J  ४. योगपक्षे J
५. भवितुमर्हतीति TC  ६. अनुमानत्वेन J

तत्र यत् सम्बद्धयोर्लिङ्गलिङ्गिनोः प्रत्यक्षं यच्च लिङ्गमात्रप्रत्यक्षग्रहणम्, नैतदन्तरेणानुमानस्य प्रवृत्तिरस्ति। [१]न चेदमनुमानमिन्द्रियार्थसन्निकर्षजत्वात्। न चानुमेयस्येन्द्रियेण सन्निकर्षादनुमानं भवति। सोऽयं प्रत्यक्षानुमानयोर्लक्षणभेदो महानाश्रयितव्य इति।

न चैकदेशोपलब्धिरवयविसद्भावात्। न [२]चेदमेकदेशोपलब्धिमात्रम्। किं तर्हि? **एकदेशोपलब्धिश्च तत्सहचरितावयव्युपलब्धिश्च, कस्मात्? अवयविसद्भावात्। अस्ति ह्ययमेकदेशव्यतिरिक्तोऽवयवी तस्यावयवस्थानस्योपलब्धिकारणप्राप्तस्यैकदेशोपलब्धावनुपलब्धिरनुपपन्नेति।**

अकृत्स्नग्रहणादिति चेत्? न, कारणतोऽन्यस्यैकदेशस्यासंभवात्[३]। न चावयवाः कृत्स्ना गृह्यन्ते, अवयवैरवयवान्तरव्यवधानात् नाप्यवयवी कृत्स्नो गृह्यत इति। नायं गृह्यमाणेष्ववयवेषु परिसमाप्त इति। सेयमेकदेशोपलब्धिरनिवृत्तैवेति।

कृत्स्नमिति वै खल्वशेषतायां सत्यां भवति। अकृत्स्नमिति शेषे सति। तच्चैतदवयवेषु बहुष्वस्ति अव्यवधाने ग्रहणाद्, व्यवधाने चाग्रहणादिति। अङ्ग तु भवान् पृष्टो व्याचष्टां गृह्यमाणस्यावयविनः किमगृहीतं मन्यते, येनैकदेशोपलब्धिः स्यादिति। न ह्यस्य कारणेभ्योऽन्ये एकदेशा भवन्तीति तत्रावयववृत्तं नोपपद्यत इति। इदं तस्य वृत्तम्, येषामिन्द्रियसन्निकर्षाद्[४] ग्रहणमवयवानां तैः सह गृह्यते, येषामवयवानां व्यवधानादग्रहणं तैः सह न गृह्यते। न चैतत्कृतोऽस्ति भेद इति।

समुदाय्यशेषता वा। समुदायो वृक्षः स्यात्[५] तत्प्राप्तिर्वा इति[६]। उभयथापि ग्रहणाभावः। मूलस्कन्धशाखापलाशादीनामशेषता वा समुदायो वृक्ष इति स्यात्, प्राप्तिर्वा समुदायिनामिति? उभयथा च[७] समुदायभूतस्य वृक्षस्य ग्रहणं नोपपद्यत इति[८]। अवयवैस्तावदवयवान्तरव्यवधानादशेषग्रहणं नोपपद्यते। प्राप्तिग्रहणमपि नोपपद्यते, प्राप्तिमतामग्रहणात्। सेयमेकदेशग्रहणसहचरिता वृक्षबुद्धिर्द्रव्यान्तरोत्पत्तौ

---

१. न त्वेतद॰ TC २. चैक॰ TC ३. ॰स्याभावात् TC ४. ॰न्द्रियार्थस॰ J
५. स्यात् TC ६. इति Om TC ७. च J ८. इति Om J

कल्पते, न समुदायमात्र इति ॥३२॥

॥प्रत्यक्षस्यानुमानत्वपरीक्षाप्रकरणम्॥

# [ अवयविपरीक्षाप्रकरणम् ]

[**वा** पृः २०८; **टी** पृः ३४२; **प** पृः ३६२]

**साध्यत्वादवयविनि सन्देहः ॥२।१।३३॥**

यदुक्तमवयविसद्भावादिति, अयमहेतुः साध्यत्वात्। साध्यं तावदेतत् कारणेभ्यो द्रव्यान्तरमुत्पद्यत इति। अनुपपादितमेतत्। एवं च सति विप्रतिपत्तिमात्रं भवति। विप्रतिपत्तेश्चावयविनि संशय इति ॥३३॥

[**वा** पृः २२७; **टी** पृः ३४७; **प** पृः ३६४]

**सर्वाग्रहणमवयव्यसिद्धेः ॥२।१।३४॥**

यद्यवयवी नास्ति सर्वस्य ग्रहणं नोपपद्यते। किं तत्सर्वम्? द्रव्यगुणकर्मसामान्यविशेषसमवायाः। कथं कृत्वा? परमाणुसमवस्थानं तावद् दर्शनविषयो न भवत्यतीन्द्रियत्वादणूनाम्। द्रव्यान्तरं चावयविभूतं दर्शनविषयो नास्ति। दर्शनविषयस्थाश्चेमे गुणादयो[1] धर्मा गृह्यन्ते। ते तु निरधिष्ठाना न गृह्येरन्। गृह्यन्ते तु कुम्भोऽयं श्याम एको महान् संयुक्तः स्पन्दते अस्ति मृन्मयश्चेति। सन्ति चेमे गुणादयो धर्मा इति। तेन सर्वस्य ग्रहणात् पश्यामोऽस्ति द्रव्यान्तरभूतोऽवयवीति ॥३४॥

---

१. द्रव्यादयो TC

[**वा** पृः २२८; **टी** पृः ३४७; **प** पृः ३६५]

**धारणाकर्षणोपपत्तेश्च ॥२।१।३५॥**

अवयव्यर्थान्तरमवयवेभ्य[१] इति **परः**[२]। संग्रहकारिते वै धारणाकर्षणे। संग्रहो नाम संयोगसहचरितं गुणान्तरं स्नेहद्रवत्वकारितम्, अपां संयोगादामे कुम्भे, अग्निसंयोगात् पक्वे। यदि त्ववयवकारिते अभविष्यतां पांशुराशिप्रभृतिष्वप्यज्ञास्येताम्। द्रव्यान्तरानुत्पत्तौ च तृणोपलकाष्ठादिषु जतुसंगृहीतेषु[३] नाभविष्यतामिति। अथावयविनं प्रत्याचक्षाणको मा भूत् प्रत्यक्षलोप इत्यणुसञ्चयमात्रदर्शनविषयं[४] प्रतिजानानः किमयमनुयोक्तव्यः? एकमिदं द्रव्यमित्येकत्वबुद्धेर्विषयं पर्यनुयोज्यः, किमियमेकमिति बुद्धिर्नानार्थविषया, आहोस्विदभिन्नार्थविषयेति? अभिन्नार्थविषयेति चेत्? अर्थान्तराभ्यनुज्ञानादवयविसिद्धिः। नानार्थविषयेति चेत्? [५]भिन्नेष्वेकदर्शनानुपपत्तिः। अनेकस्मिन्नेक इति व्याहता बुद्धिर्न दृश्यत इति॥३५॥

[**वा** पृः २२९; **टी** पृः ३४८; **प** पृः ३६६]

**सेनावनवद् ग्रहणमिति चेन्नातीन्द्रियत्वादणूनाम्॥२।१।३६॥**

यथा सेनाङ्गेषु वनाङ्गेषु च आरादगृह्यमाणपृथक्त्वेषु एकमिदमित्युत्पद्यते[६] बुद्धिः, एवमणुषु सञ्चितेष्वगृह्यमाणपृथक्त्वेष्वेकमिदमित्युपपद्यते बुद्धिरिति। [७]यथा गृह्यमाणपृथक्त्वानां [८]खलु वै सेनावनाङ्गानामारात् कारणान्तरतः पृथक्त्वस्याग्रहणम्, यथा गृह्यमाणजातीनां पलाश इति वा खदिर इति वा नाराज्जातिग्रहणं भवति, यथा

१. °न्तरभूत इति TC २. इतिपरः J Supra lin ३. °तेष्वपि TC ४. °सञ्चयं दर्शन° TC ५. भिन्नेष्वदर्श° J ६. °त्युपपद्यते TC ७. यथा Om J ८. खलु वै Om TC

गृह्यमाणप्रस्पन्दानां नारात् प्रस्पन्दग्रहणम्, गृह्यमाणे चार्थजाते पृथक्त्वस्याग्रहणादेकमिति भाक्तः प्रत्ययो भवति, न त्वणूनामगृह्यमाणपृथक्त्वानां[१] कारणतः[२] पृथक्त्वस्याग्रहणाद् भाक्त [३]एकप्रत्ययोऽतीन्द्रियत्वादणूनामिति।

इदमेव च परीक्ष्यते किमेकप्रत्ययोऽणुसञ्चयविषय आहोस्वित् नेति, अणुसञ्चय एव सेनाङ्गानि वनाङ्गानि च[४]। न च परीक्ष्यमाणमुदाहरणं युक्तम्, साध्यत्वादिति।

दृष्टमिति चेत्? न, तद्विषयस्य परीक्षोपपत्तेः। यदपि मन्येत दृष्टमिदं सेनाङ्गानां वनाङ्गानां च[५] पृथक्त्वस्याग्रहणादभेदेनैकमिति ग्रहणम्। न च दृष्टं शक्यं प्रत्याख्यातुमिति। तच्च नैवम्, तद्विषयस्य परीक्षोपपत्तेः। दर्शनविषय एवायं परीक्ष्यते। योऽयमेकमिदमिति प्रत्ययो दृश्यते, स परीक्ष्यते—किं द्रव्यान्तरविषयो वा, अथाणुसञ्चयविषय इति? अत्र दर्शनमन्यतरस्य साधकं न भवतीति। किं च[६], नानाभावे चाणूनां [७]सञ्चितानां पृथक्त्वस्याग्रहणादभेदेनैकमिति ग्रहणम् अतस्मिंस्तदिति प्रत्ययः, यथा स्थाणौ पुरुष इति। ततः किम्? अतस्मिंस्तदिति प्रत्ययस्य प्रधानापेक्षित्वात् प्रधानसिद्धिः। स्थाणौ पुरुषप्रत्ययस्य किं प्रधानम्? योऽसौ पुरुषे पुरुषप्रत्ययः तस्मिन् सति पुरुषसामान्यग्रहणादपुरुषे पुरुषप्रत्ययो भवति[८]। एवं नानाभूतेष्वेकमिति सामान्यग्रहणात् प्रधाने सति भवितुमर्हतीति। प्रधानं च सर्वस्याग्रहणादिति नोपपद्यते। तस्मादभिन्न एवायमभेदप्रत्यय एकमिति।

इन्द्रियान्तरविषयेष्वभेदप्रत्ययः प्रधानमिति चेत्, न, विशेषहेत्वभावाद् दृष्टान्ताव्यवस्था, श्रोत्रादिविषयेषु शब्दादिष्वभिन्नेष्वेकप्रत्ययः प्रधानम्, अनेकस्मिन्नेकप्रत्ययस्येति। एवं च सति दृष्टान्तोपादानं न व्यवतिष्ठते विशेषहेत्वभावात्। अणुषु सञ्चितेष्वेकप्रत्ययः किमतस्तिंस्तदिति प्रत्ययः, स्थाणौ पुरुषप्रत्ययवत्, अथार्थस्य तथाभावात् तस्मिंस्तदिति प्रत्ययो यथा शब्दस्यैकत्वादेकः

---

१. त्वणूनां गृह्य॰ C  २. कारणान्तरतः J  ३. एकत्वप्रत्ययो भवति अती॰ J
४. सेनावनाङ्गानि TC  ५. सेनावनाङ्गानां TC  ६. किं च Om TC  ७. सञ्चितानां Om TC  ८. ॰ग्रहणात् स्थाणौ पुरुषोऽयमिति। TC

शब्द इति। विशेषहेतुपरिग्रहमन्तरेण दृष्टान्तौ संशयमापादयतः। कुम्भवत् सञ्चयमात्रं गन्धादयोऽपीत्यनुदाहरणं गन्धादय इति। एवं परिमाणसंयोगप्रस्पन्दजातिविशेष-प्रत्ययानप्यनुयोक्तव्यः। तेषु चैवं प्रसङ्गः।

एकत्वबुद्धिस्तस्मिंस्तदिति प्रत्यय इति विशेषहेतुर्महदिति प्रत्ययेन सामानाधिकरण्यात्। एकमिदं महच्चेति एकविषयौ प्रत्ययौ समानाधिकरणौ[१] भवतः। तेन विज्ञायते, यन्महत् तदेकमिति। अणुसमूहातिशयग्रहणं महत्प्रत्यय इति चेत्? सोऽयमतस्मिंस्तदिति प्रत्ययः। अमहत्सु चाणुषु, अमहत्सु चाणुसमूहेषु महत्प्रत्ययोऽतस्मिंस्तदिति[२] प्रत्ययो भवतीति[३]। किं चातः? अतस्मिंस्तदिति प्रत्ययस्य प्रधानापेक्षित्वात् प्रधानसिद्धिरिति भवितव्यं महत्येव महत्प्रत्ययेनेति।

अणुः शब्दो महानिति च व्यवसायात् प्रधानसिद्धिरिति चेत्? न, मन्दतीव्रताग्रहणमियत्तानवधारणात्, यथा द्रव्ये। अणुः शब्दोऽल्पो मन्द इत्येतस्य ग्रहणम्, महान् शब्दः पटुस्तीव्र इत्येतस्य ग्रहणम्। कस्मात्? इयत्तानवधारणात्। न ह्ययं महान् शब्द इति व्यवस्यन्नियानयमित्यवधारयति यथा बदरामलक-विल्वादीनि।

संयुक्ते इमे इति च द्वित्वसमानाश्रयप्राप्तिग्रहणम्। द्वौ समुदायावाश्रयः संयोगस्येति चेत्? कोऽयं समुदायः? प्राप्तिरनेकस्यानेका वा प्राप्तिरेकस्य समुदाय इति चेत्? प्राप्तेरग्रहणं प्राप्त्याश्रितायाः। संयुक्ते इमे वस्तुनी इति, नात्र द्वे प्राप्ती संयुक्ते गृह्येते।

अनेकसमूहः समुदाय इति चेत्? न, द्वित्वेन समानाधिकरणस्य ग्रहणात्। द्वाविमौ संयुक्तावर्थाविति ग्रहणे सति नानेकसमूहाश्रयः संयोगो गृह्यते। न च द्वयोरण्वोर्ग्रहणमस्ति। तस्मान्महती द्वित्वाश्रयभूते द्रव्ये संयोगस्य स्थानमिति।

प्रत्यासत्तिः प्रतिघातावसाना संयोगो नार्थान्तरमिति चेत्? नार्थान्तरहेतुत्वात् संयोगस्य। शब्दरूपादिप्रस्पन्दानां हेतुः संयोगः। न च द्रव्ययोर्गुणान्तरोपजननमन्तरेण

१. समानेऽधिकरणे J २. सोऽयममहत्सु चाणुषु महत्प्रत्ययो C ३. भवतीति Om J

शब्दे रूपादिषु प्रस्पन्दे च कारणत्वं गृह्यते, तस्माद् गुणान्तरं संयोगः। संयुक्तप्रत्ययगोचरः[१]। प्रत्ययविषयश्चार्थान्तरं तत्प्रतिषेधो वा। यथा कुण्डली गुरुरकुण्डलश्छात्र इति। संयोगबुद्धेश्च यद्यर्थान्तरं[२] न विषयः, [३]अर्थान्तरप्रतिषेधस्तर्हि विषयः। तत्र प्रतिषिध्यमानवचनम्। संयुक्ते द्रव्ये इति [४]यदर्थान्तरमन्यत्र दृष्टमिह प्रतिषिध्यते तद् वक्तव्यमिति। द्वयोर्महतोराश्रितस्य ग्रहणात् नाण्वाश्रय इति।

जातिविशेषस्य प्रत्ययानुवृत्तिलिङ्गस्याप्रत्याख्यानम्। प्रत्याख्याने वा प्रत्ययव्यवस्थानुपपत्तिः। [५]व्यधिकरणस्य निराधारस्य सामान्यस्यानभिव्यक्तेर-धिकरणवचनम्। अणुसमवस्थानं विषय इति चेत्? प्राप्ताप्राप्तसामर्थ्यवचनम्। किमप्राप्तेऽणुसमवस्थाने तदाश्रयो जातिविशेषो गृह्यते, अथ प्राप्त इति? अप्राप्ते ग्रहणमिति चेत्? व्यवहितस्याप्यणुसमवस्थानस्याप्युपलब्धिप्रसङ्गः। व्यवहितेऽप्यणुसमवस्थाने तदाश्रयो जातिविशेषो गृह्येत। प्राप्ते ग्रहणमिति चेत्? मध्यपरभागयोरप्राप्तावनभिव्यक्तिः। यावत् प्राप्तं भवति, तावत्यभिव्यक्तिरिति चेत्? तावतोऽधिकरणत्वमणुसमवस्थानस्य। यावति प्राप्ते जातिविशेषो गृह्यते तावदस्याधिकरणमिति प्राप्तं भवति। तत्रैकसमुदाये प्रतीयमानेऽर्थभेदः। एवं च सति योऽयमणुसमुदायो वृक्ष इति प्रतीयते तत्र वृक्षबहुत्वं प्रतीयेत[६]। यत्र यत्र ह्यणुसमुदायस्य भागे वृक्षत्वं गृह्यते स स वृक्ष इति।

तस्मात् समुदिताणुसमवस्थानस्यार्थान्तरस्य[७] जातिविशेषाभिव्यक्तिविषय-त्वादवयव्यर्थान्तरभूत इति॥३६॥

॥अवयविपरीक्षाप्रकरणम्॥

---

१. संयुक्तप्रत्ययगोचरः J margin २. यद्यात्मान्तरं J ३. आत्मान्तर° J ४. यदात्मान्तर° J ५. व्यधिकरणस्यानभि° TC ६. गृह्येत J ७. °स्यात्मा-न्तरस्य J

## [ अनुमानपरीक्षाप्रकरणम् ]

[**वा** पृ: २३७; **टी** पृ: ३५४; **प** पृ: ३६९]

परीक्षितं प्रत्यक्षम्। अनुमानमिदानीं परीक्ष्यते—

**रोधोपघातसादृश्येभ्यो व्यभिचारादनुमानमप्रमाणम्॥२।१।३७॥**

अप्रमाणमिति एकदाप्यर्थस्य न प्रतिपादकमिति। रोधादपि नदी पूर्णा गृह्यते। तदा चोपरिष्टाद् वृष्टो देव इति मिथ्यानुमानम्। नीडोपघातादपि पिपीलिकाण्डसञ्चारो भवति। तदा च भविष्यति वृष्टिरिति मिथ्यानुमानमिति। पुरुषोऽपि मयूरवाशितमनुकरोति। तदापि शब्दसादृश्यान्मिथ्यानुमानं भवति॥३७॥

[**वा** पृ: २३८; **टी** पृ: ३५५; **प** पृ: ३७०]

**नैकदेशत्राससादृश्येभ्योऽर्थान्तरभावात्॥२।१।३८॥**

नायमनुमानव्यभिचारः। अननुमाने तु खल्वयमनुमानाभिमानः। कथम्? नाविशिष्टोऽर्थो लिङ्गं भवितुमर्हतीति। पूर्वोदकविशिष्टं खलु वर्षोदकं शीघ्रतरत्वं स्रोतसो बहुतरफेनफलपर्णकाष्ठादिवहनं चोपलभमानः पूर्णत्वेन नद्या उपरिष्टाद् वृष्टो देव इत्यनुमिनोति, नोदकवृद्धिमात्रेण। पिपीलिकाप्रायस्य चाण्डसञ्चारे भविष्यति वृष्टिरित्यनुमीयते, न कासाञ्चिदिति। नेदं मयूरवाशितं तत्सदृशोऽयं शब्द इति विशेषापरिज्ञानान्मिथ्यानुमानम्। यस्तु सदृशात् विशिष्टात् शब्दाद् विशिष्टं मयूरवाशितं[१] गृह्णाति तस्य विशिष्टोऽर्थो गृह्यमाणो लिङ्गम्, यथा सर्पादीनामिति। सोऽय-

---

१. सदृशाद् विशिष्टात् शब्दाद् विशिष्टमयूर° C

मनुमातुरपराधो नानुमानस्य, योऽर्थविशेषेणानुमेयमर्थमविशिष्टार्थदर्शनेन बुभुत्सत इति ॥३८॥

॥अनुमानपरीक्षाप्रकरणम्॥

## [ वर्तमानकालपरीक्षाप्रकरणम् ]

[**वा** पृ: २३९; **टी** पृ: ३५६; **प** पृ: ३७१]

त्रिकालविषयमनुमानं त्रैकाल्यग्रहणादित्युक्तम्। तत्र च—

**वर्तमानाभावः पततः पतितपतितव्यकालोपपत्तेः॥२।१।३९॥**

वृन्तात् प्रच्युतस्य फलस्य भूमिं प्रत्यासीदतो यदूर्ध्वं स पतितोऽध्वा। तत्संयुक्तः कालः पतितकालः। योऽधस्तात् स पतितव्योऽध्वा। तत्संयुक्तः कालः पतितव्यः कालः। नेदानीं तृतीयोऽध्वा विद्यते यत्र पततीति वर्तमानः कालो गृह्येत। तस्माद् वर्तमानः कालो [१]नोपपद्यत इति॥३९॥

[**वा** पृ: २४०; **टी** पृ: ३५८; **प** पृ: ३७२]

**तयोरप्यभावो वर्तमानाभावे तदपेक्षत्वात्॥२।१।४०॥**

नाध्वव्यङ्ग्यः कालः। किं तर्हि? क्रियाव्यङ्ग्यः पततीति। या पतनक्रिया सा यदोपरता[२] भवति स कालः पतितः कालः। यदोत्पत्स्यते स पतितव्यः कालः। यदा तु द्रव्ये वर्तमाना क्रिया गृह्यते स वर्तमानः कालः। यदि चायं द्रव्ये वर्तमानं पतनं न गृह्णाति, कस्योपरममुत्पत्स्यमानतां च प्रतिपद्यते? पतितः काल

१. न विद्यते इति TC २. व्युपरता TC

इति भूता क्रिया पतितव्यः काल इति चोत्पतस्यमाना क्रिया। उभयोः कालयोः क्रियाहीनं द्रव्यम्। [१]अथ पततीति क्रियासम्बद्धम्। सोऽयं यदा क्रियाद्रव्ययोः सम्बन्धं गृह्णाति स वर्तमानः कालः। तदाश्रयौ चेतरौ कालौ तदभावान्न स्यातामिति ॥४० ॥

[**वा** पृः २४०; **टी** पृः ३५९; **प** पृः ३७३]

अथापि,

**नातीतानागतयोरितरेतरापेक्षा सिद्धिः ॥२।१।४१ ॥**

यद्यतीतानागतावितरेतरापेक्षौ सिध्येतां प्रतिपद्येमहि वर्तमानकालविलोपम्। न चातीतापेक्षा अनागतसिद्धिः। नाप्यनागतापेक्षातीतसिद्धिः। कया युक्त्या? केन कल्पेनातीतः कथमतीतापेक्षानागतसिद्धिः, केन च कल्पेनानागत इति नैतच्छक्यं निर्वक्तुम्। अव्याकरणीयमेतद्वर्तमानकाललोप इति। यच्च मन्येत ह्रस्वदीर्घयोः स्थलनिम्नयोश्छायातपयोश्च यथेतरेतरापेक्षा सिद्धिरेवमतीतानागतयोरिति, तन्नोपपद्यते विशेषहेत्वभावात्। दृष्टान्तवत् प्रतिदृष्टान्तोऽपि प्रसज्यते, यथा रूपस्पर्शौ गन्धरसौ नेतरेतरापेक्षौ सिध्यत एवमतीतानागतावपीति नेतरेतरापेक्षा कस्यचित् सिद्धिरस्ति। यस्मादेकाभावेऽन्यतराभावादुभयाभावः यद्येकस्यान्यतरापेक्षा सिद्धिः, अन्यतरस्येदानीं किमपेक्षा? यद्यन्यतरस्यैकापेक्षा सिद्धिरेकस्येदानीं किमपेक्षा? एवमेकस्याभावेऽन्यतरन्न सिध्यतीत्युभयाभावः प्रसज्यत इति ॥४१ ॥

[**वा** पृः २४१; **टी** पृः ३५९; **प** पृः ३७३]

अर्थसद्भावव्यङ्ग्यश्चायं वर्तमानः कालः, विद्यते द्रव्यं विद्यते गुणः विद्यते कर्मेति। यस्य चायं नास्ति, तस्य—

---

१. अधः TC

**वर्तमानाभावे सर्वाग्रहणं प्रत्यक्षानुपपत्तेः॥२।१।४२॥**

प्रत्यक्षमिन्द्रियार्थसन्निकर्षजम्। न चाविद्यमानमसदिन्द्रियेण सन्निकृष्यते। न चायं विद्यमानं सत् किञ्चिदनुजानातीति प्रत्यक्षनिमित्तं प्रत्यक्षविषयः प्रत्यक्षं च ज्ञानं सर्वं नोपपद्यते। प्रत्यक्षानुपपत्तौ च तत्पूर्वकत्वादनुमानागमयोरनुपपत्तिः। सर्वप्रमाणविलोपे सर्वग्रहणं न भवतीति।

उभयथा च वर्तमानः कालो गृह्यते, क्वचिदर्थसद्भावव्यङ्ग्यो यथा अस्ति द्रव्यमिति। क्वचित् क्रियासन्तानव्यङ्ग्यो यथा पचति छिनत्तीति। नानाविधा चैकार्था क्रिया क्रियासन्तानः क्रियाभ्यासश्च, नानाविधा चैकार्था क्रिया पचतीति, स्थाल्यधिश्रयणम्, उदकासेचनम्, तण्डुलावपनम्, एधोऽवसर्पणम्, अग्न्यभिज्वालनम्, दर्वीघट्टनम्, मण्डस्रावणम्, अधोऽवतारणमिति। छिनत्तीति क्रियाभ्यासः उद्यम्योद्यम्य परशुं दारुणि निपातयन् छिनत्तीत्युच्यते। यच्चेदं पच्यमानं छिद्यमानं च तत् क्रियमाणम्॥४२॥

[**वा** पृः २४२; **टी** पृः ३६०; **प** पृः ३७३]

तस्मिन् क्रियमाणे—

**कृतताकर्तव्यतोपपत्तेस्तूभयथाग्रहणम्॥२।१।४३॥**

क्रियासन्तानोऽनारब्धश्चिकीर्षितोऽनागतः कालः पक्ष्यतीति। प्रयोजनावसानः क्रियासन्तानोपरमोऽतीतः कालोऽपाक्षीदिति। आरब्धक्रियासन्तानो वर्तमानः कालः पचतीति। तत्र च या क्रिया[१] उपरता सा कृतता, या चिकीर्षिता सा कर्तव्यता, या विद्यमाना सा क्रियमाणता। तदेवं क्रियासन्तानस्थस्त्रैकाल्यसमाहारः, पचति पच्यत इति वर्तमानग्रहणेन गृह्यते। क्रियासन्तानस्य ह्यत्राविच्छेदोऽभिधीयते, नारम्भो

१. क्रिया Alaṃkāra only

नोपरम इति। सोऽयमुभयथा वर्तमानो गृह्यतेऽपवृक्तो[1] व्यपवृक्तश्चातीतानागताभ्याम्। स्थितिव्यङ्ग्यो विद्यते द्रव्यमिति। क्रियासन्तानाविच्छेदाभिधायी च त्रैकाल्यान्वितः पचति छिनत्तीति। अन्यश्च प्रत्यासत्तिप्रभृतेरर्थस्य विवक्षायां तदभिधायी बहुप्रकारो लोकप्रयोगेषूत्प्रेक्षितव्यः। तस्मादस्ति वर्तमानः काल इति॥४३॥

॥वर्तमानकालपरीक्षाप्रकरणम्॥

## [ उपमानपरीक्षाप्रकरणम् ]

[**वा** पृः २४३; **टी** पृः ३६१; **प** पृः ३७४]

**अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिः॥२।१।४४॥**

अत्यन्तसाधर्म्यादुपमानं न सिध्यति। न चैवं भवति यथा गौरेवं गौरिति। प्रायःसाधर्म्यादुपमानं न सिध्यति। न हि भवति यथा अनड्वानेवं महिष इति। एकदेशसाधर्म्यादुपमानं न सिध्यति। न हि सर्वेण सर्वमुपमीयत इति॥४४॥

[**वा** पृः २४३; **टी** पृः ३६२; **प** पृः ३७४]

**प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः॥२।१।४५॥**

न साधर्म्यस्य कृत्स्नप्रायाल्पभावमाश्रित्योपमानं प्रवर्तते। किं तर्हि? प्रसिद्धसाधर्म्यात् साध्यसाधनभावमाश्रित्य प्रवर्तते। यत्र चैतदस्ति, न तत्रोपमानं प्रतिषेद्धुं शक्यम्। तस्माद् यथोक्तदोषो नोपपद्यत इति॥४५॥

---

१. संवृक्तो J

[**वा** पृः २४४; **टी** पृः ३६३; **प** पृः ३७५]

अस्तु तर्हि उपमानमनुमानम्?—

**प्रत्यक्षेणाप्रत्यक्षसिद्धेः ॥२।१।४६॥**

यथा धूमेन प्रत्यक्षेणाप्रत्यक्षस्य वह्नेर्ग्रहणमनुमानम्, एवं गवा प्रत्यक्षेणाप्रत्यक्षस्य गवयस्य ग्रहणमिति[१] नेदमनुमानाद् विशिष्यते ॥४६॥

[**वा** पृः २४४; **टी** पृः ३६३; **प** पृः ३७५]

विशिष्यत इत्याह? कया युक्त्या?

**नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्यामः ॥२।१।४७॥**

यदा ह्ययमुपयुक्तोपमानो गोदर्शी गवा समानमर्थं पश्यति, तदा अयं गवय इत्यस्य संज्ञाशब्दस्य व्यवस्थां प्रतिपद्यते। न चैवमनुमानमिति। परार्थं चोपमानम्। यस्य [२]ह्युपमेयमप्रसिद्धम्, तदर्थं प्रसिद्धोभयेन क्रियत इति। परार्थमुपमानमिति चेत्? न, स्वयमध्यवसायात्। भवति च भोः स्वयमप्यध्यवसायः, यथा गौरेवं गवय इति। नाध्यवसायः प्रतिषिध्यते। उपमानं तु तन्न भवति।

**प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् [ १।१।५ ]**

न च यस्योभयं प्रसिद्धं तं प्रति साध्यसाधनभावो विद्यत इति ॥४७॥

[**वा** पृः २४५; **टी** पृः ३६४; **प** पृः ३७५]

अथापि—

---

१. प्रतिपत्तिरिति J २. ह्युपमानमप्र॰ TC

**तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः॥२।१।४८॥**

तथेति समानधर्मोपसंहारादुपमानं सिध्यति, नानुमानम्। अयं चानयो- र्विशेषः॥४८॥

॥उपमानपरीक्षाप्रकरणम्॥

## [ शब्दसामान्यपरीक्षाप्रकरणम् ]

[**वा** पृः २४५; **टी** पृः ३६४; **प** पृः ३७६]

**शब्दोऽनुमानमर्थस्यानुपलब्धेरनुमेयत्वात्॥२।१।४९॥**

शब्दोऽनुमानम्, न प्रमाणान्तरम्। कस्मात्? शब्दार्थस्यानुमेयत्वात्। कथमनुमेयत्वम्? प्रत्यक्षतोऽनुपलब्धेः। यथानुपलभ्यमानो लिङ्गी मितेन लिङ्गेन पश्चान्मीयत इति अनुमानम्, एवं मितेन शब्देन पश्चान्मीयत अर्थोऽनुपलभ्यमान इत्यनुमानं शब्दः॥४९॥

[**वा** पृः २४७; **टी** पृः ३६५; **प** पृः ३७७]

इतश्चानुमानं शब्दः—

**उपलब्धेरद्विप्रवृत्तित्वात्॥२।१।५०॥**

प्रमाणान्तरभावे द्विप्रवृत्तिरुपलब्धिः। अन्यथा ह्युपलब्धिरनुमाने, अन्यथोपमाने। तद् व्याख्यातम्। शब्दानुमानयोस्तूपलब्धिरद्विप्रवृत्तिः, यथानुमाने प्रवर्तते तथा

शब्देऽपि, विशेषाभावादनुमानं शब्द इति ॥५० ॥

[**वा** पृः २४७; **टी** पृः ३६५; **प** पृः ३७७]

**संबन्धाच्च ॥२ ।१ ।५१ ॥**

शब्दोऽनुमानमिति वर्तते। संबद्धयोश्च शब्दार्थयोः संबन्धप्रसिद्धौ शब्दोपलब्धेरर्थग्रहणं यथा संबद्धयोर्लिङ्गलिङ्गिनोः संबन्धप्रसिद्धौ[१] लिङ्गोपलब्धेः लिङ्गिग्रहणमिति ॥५१ ॥

[**वा** पृः २४७; **टी** पृः ३६५; **प** पृः ३७७]

यत् तावदर्थस्यानुमेयत्वादिति तन्न—

**आप्तोपदेशसामर्थ्याच्छब्दादर्थसम्प्रत्ययः ॥२ ।१ ।५२ ॥**

स्वर्गः, अप्सरसः, उत्तराः कुरवः, सप्तद्वीपाः, समुद्रः, लोकसन्निवेश इत्येवमादेरप्रत्यक्षस्यार्थस्य न शब्दमात्रात् प्रत्ययः। किं तर्हि? आप्तैरयं प्रयुक्तः[२] शब्द इत्यतः सम्प्रत्ययः, विपर्ययेण सम्प्रत्ययाभावात्। न त्वेवमनुमानमिति।

यत् पुनरिद**मुपलब्धेरद्विप्रवृत्तित्वादि**[२.१.५०]ति, अयमेव शब्दानुमानयोरुपलब्धेः प्रवृत्तिभेदः। तत्र विशेषे सति अहेतुर्विशेषाभावादिति।

यत् पुनरिदं सम्बन्धाच्चेति, अस्ति च शब्दार्थयोः सम्बन्धोऽनुज्ञातः। अस्ति च प्रतिषिद्धः अस्येदमिति षष्ठीविशिष्टस्य वाक्यस्यार्थविशेषोऽनुज्ञातः, प्राप्तिलक्षणस्तु

१. प्रतीतौ TC २. उक्तः TC

शब्दार्थयोः सम्बन्धः प्रतिषिद्धः। कस्मात्? प्रमाणतोऽनुपलब्धेः। प्रत्यक्षतस्तावच्छब्दार्थप्राप्तेर्नोपलब्धिरतीन्द्रियत्वात्। येनेन्द्रियेण गृह्यते शब्दस्तस्य विषयभावमतिवृत्तोऽर्थो न तेन गृह्यते। अस्ति चातीन्द्रियविषयभूतोऽप्यर्थः। समानेन चेन्द्रियेण गृह्यमाणयोः प्राप्तिर्गृह्यत इति ॥५२॥

[**वा** पृः २४८; **टी** पृः ३६९; **प** पृः ३८१]

प्राप्तिलक्षणे च गृह्यमाणे सम्बन्धे शब्दार्थयोः शब्दान्तिके वार्थः स्यात् अर्थान्तिके वा शब्दः स्यात्, उभयं वोभयत्र। अथ खलूभयम्[१]?

**पूरणप्रदाहपाटनानुपलब्धेश्च सम्बन्धाभावः ॥२।१।५३॥**

स्थानकरणाभावादिति[२] चार्थः। न चायमनुमानतोऽप्युपलभ्यते शब्दान्तिकेऽर्थ इति। एतस्मिन् पक्षे आस्यस्थानकरणोच्चारणीयः शब्दस्तदन्तिके चार्थ इति अन्नाग्न्यसिशब्दोच्चारणे पूरणप्रदाहपाटनानि गृह्येरन्। न च गृह्यन्ते। अग्रहणात् नानुमेयः प्राप्तिलक्षणः संबन्धः। अर्थान्तिके शब्द इति स्थानकरणासम्भवाद् अनुच्चारणम्। स्थानं कण्ठादयः, करणं प्रयत्नविशेषः। तस्यार्थान्तिकेऽनुपपत्तिरिति। उभयप्रतिषेधाच्च नोभयमुभयत्र। तस्मान्न शब्देनार्थः प्राप्त इति ॥५३॥

[**वा** पृः २५०; **टी** पृः ३७०; **प** पृः ३८१]

**शब्दार्थव्यवस्थानादप्रतिषेधः ॥२।१।५४॥**

---

१. प्राप्ति ............भयम्? Placed after the sūtra C  २. स्थानकरणासंभवाच्चेति J

शब्दादर्थसंप्रत्ययस्य व्यवस्थादर्शनादनुमीयते, अस्ति शब्दार्थसम्बन्धो व्यवस्थाकारणम्। असम्बन्धे हि शब्दमात्रादर्थमात्रे प्रत्ययप्रसङ्गः। तस्मादप्रतिषेधः सम्बन्धस्येति ॥५४॥

[**वा** पृः २५०; **टी** पृः ३७०; **प** पृः ३८१]

अत्र समाधिः—

**न, सामयिकत्वाच्छब्दार्थसम्प्रत्ययस्य ॥२।१।५५॥**

न सम्बन्धकारितं शब्दार्थव्यवस्थानम्। किं तर्हि? समयकारितम्। यत् तदवोचाम अस्येदमिति षष्ठीविशिष्टस्य वाक्यस्यार्थविशेषोऽनुज्ञातः शब्दार्थयोः सम्बन्ध इति समयं तदवोचाम इति। कः पुनरयं समयः? अस्य शब्दस्येदमर्थजातमभिधेयमिति अभिधानाभिधेयनियमनियोगः। तस्मिन्नुपयुक्ते शब्दादर्थसम्प्रत्ययो भवति। विपर्यये हि शब्दश्रवणेऽपि प्रत्ययाभावः। सम्बन्धवादिनोऽपि चायमवर्जनीय इति। प्रयुज्यमानग्रहणाच्च समयोपयोगो लौकिकानाम्। समयपरिपालनार्थं चेदं पदलक्षणाया वाचोऽन्वाख्यानं व्याकरणम्, [१]वाक्यलक्षणायास्तु वाचोऽर्थो लक्षणम्[२]। पदसमूहो वाक्यमर्थपरिसमाप्ताविति। तदेवं प्राप्तिलक्षणस्य शब्दार्थसम्बन्धस्यार्थतुषोऽप्यनुमानहेतुर्न भवतीति ॥५५॥

[**वा** पृः २५१; **टी** पृः ३७२; **प** पृः ३८२]

**जातिविशेषे चानियमात् ॥२।१।५६॥**

---

१. वाक्यभूतायास्तु J　　२. अर्थलक्षणम् TC

सामयिकः शब्दादर्थसम्प्रत्ययो न स्वाभाविकः। ऋष्यार्यम्लेच्छानां यथाकामं शब्दनियोगोऽर्थप्रत्यायनाय प्रवर्तते। स्वाभाविके हि शब्दस्यार्थप्रत्यायकत्वे यथाकामं न स्यात्, यथा तैजसस्य प्रकाशस्य रूपप्रत्ययहेतुत्वं न जातिविशेषे व्यभिचरतीति ॥५६॥

॥शब्दसामान्यपरीक्षाप्रकरणम्॥

## [ शब्दविशेषपरीक्षाप्रकरणम् ]

[**वा** पृः २५१; **टी** पृः ३७३; **प** पृः ३८२]

पुत्रकामेष्टिहवनाभ्यासेषु

**तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः ॥२।१।५७॥**

तस्येति शब्दविशेषमेवाधिकुरुते भगवानृषिः। शब्दस्य प्रमाणत्वं न सम्भवति। कस्मात्? अनृतदोषात्—पुत्रकामेष्टौ

पुत्रकामः पुत्रेष्ट्या यजेत

इति नेष्टौ संस्थितायां पुत्रजन्म दृश्यते। दृष्टार्थस्य वाक्यस्यानृतत्वाद् अदृष्टार्थमपि वाक्यम्—

अग्निहोत्रं जुहुयात् स्वर्गकामः [मै. उ ६/३६]

इत्याद्यनृतमिति ज्ञायते।

विहितव्याघातदोषाच्च। हवने

उदिते होतव्यम्।

अनुदिते होतव्यम्।

समयाध्युषिते होतव्यम्

इति विधाय विहितं व्याहन्ति

श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोति।

शबलोऽस्याहुतिमभ्यवहरति योऽनुदिते जुहोति।

श्यावशबलौ वास्याहुतिमभ्यवहरतो यः समयाध्युषिते जुहोति।

व्याघाताच्चान्यतरन्मिथ्येति।

पुनरुक्तदोषाच्च, अभ्यासे देश्यमाने—

त्रिः प्रथमामन्वाह त्रिरुत्तमाम् [तै० स० २/५]

इति पुनरुक्तदोषो भवति। पुनरुक्तं च प्रमत्तवाक्यमिति। तस्माद् अप्रमाणं शब्दोऽनृतव्याघातपुनरुक्तदोषेभ्य इति॥५७॥

[**वा** पृः २५२; **टी** पृः ३७४; **प** पृः ३८३]

**न, कर्मकर्तृसाधनवैगुण्यात्॥२।१।५८॥**

नानृतदोषः पुत्रकामेष्टौ। कस्मात्? कर्मकर्तृसाधनवैगुण्यात्। इष्ट्या पितरौ संप्रयुज्यमानौ पुत्रं जनयत इति। [१]इष्टिः करणं साधनम्। पितरौ कर्तारौ। संप्रयोगः कर्म। त्रयाणां गुणयोगात् पुत्रजन्म। वैगुण्याद् विपर्ययः। इष्ट्याश्रयं तावत् कर्मवैगुण्यं समीहाभ्रेषः, कर्तृवैगुण्यं अविद्वान् प्रयोक्ता कपूयाचरणश्च, साधनवैगुण्यं हविरसंस्कृतमुपहतमिति, मन्त्रा न्यूनाधिकाः स्वरवर्णहीना इति, दक्षिणा दुरागता हीना निन्दिता चेति। अथोपजनाश्रयं कर्मवैगुण्यं मिथ्यासम्प्रयोगः, कर्तृवैगुण्यं योनिव्यापदो बीजोपघातश्चेति, साधनवैगुण्यम् इष्टावभिहितम्। लोके च

अग्निकामो दारुणी मथ्नीयात्

---

१. इष्टेः C

इति विधिवाक्यम्। तत्र कर्मवैगुण्यं मिथ्याभिमन्थनम्, कर्तृवैगुण्यं प्रज्ञाप्रयत्नतः प्रमादः, साधनवैगुण्यम् आर्द्रं सुषिरं दार्विति। तत्र फलं न निष्पद्यत इति नानृतदोषः, गुणयोगेन फलनिष्पत्तिदर्शनात्। न चेदं लौकिकाद् भिद्यते

पुत्रकामः पुत्रेष्ट्या यजेत

इति ॥५८॥

[**वा** पृः २५३; **टी** पृः ३७६; **प** पृः ३८५]

**अभ्युपेत्य कालभेदे दोषवचनात्॥२।१।५९॥**

न व्याघातो हवन इत्यनुवर्तते। योऽभ्युपेतं हवनकालं भिनत्ति ततोऽन्यत्र जुहोति, तत्रायमभ्युपगनकालभेदे दोष उच्यते

श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोति

इति। तदिदं विधिभ्रेषे निन्दावचनमिति॥५९॥

[**वा** पृः २५४; **टी** पृः ३७६; **प** पृः ३८५]

**अनुवादोपपत्तेश्च॥२।१।६०॥**

पुनरुक्तदोषोऽभ्यासे नेति प्रकृतम्। अनर्थकोऽभ्यासः पुनरुक्तम्। अर्थवानभ्यासोऽनुवादः। योऽयमभ्यासः

त्रिः प्रथमामन्वाह त्रिरुत्तमाम् [तै. सं. २/५]

इत्यनुवाद उपपद्यतेऽर्थवत्त्वात्। त्रिर्वचनेन हि प्रथमोत्तमयोः पञ्चदशत्वं सामिधेनीनां भवति। तथा च मन्त्राभिवादः

इदमहं भ्रातृव्यं पञ्चदशावरेण वाग्वज्रेणावबाधे योऽस्मान् द्वेष्टि यं च वयं द्विष्मः [द्रः शाङ्ख्यायनश्रौतसूत्रम् १।५।९] इति पञ्चदश सामिधेनीर्वज्रमन्त्रोऽभिवदति, तदभ्यासमन्तरेण न स्यादिति ॥६०॥

[**वा** पृः २५५; **टी** पृः ३७७; **प** पृः ३८५]

**वाक्यविभागस्य चार्थग्रहणात्॥२।१।६१॥**

प्रमाणं शब्दो यथा लोके ॥६१॥

[**वा** पृः २५५; **टी** पृः ३७७; **प** पृः ३८५]

विभागश्च ब्राह्मणवाक्यानां त्रिविधः—

**विध्यर्थवादानुवादवचनविनियोगात्॥२।१।६२॥**

त्रिधा खलु ब्राह्मणवाक्यानि विनियुक्तानि, विधिवचनान्यर्थवादवचनान्यनुवादवचनानीति ॥६२॥

[**वा** पृः २५५; **टी** पृः ३७७; **प** पृः ३८५]

तत्र—

**विधिर्विधायकः॥२।१।६३॥**

यद्वाक्यं विधायकं चोदकं स विधिः। [१]विधिस्तु नियोगोऽनुज्ञा वा। यथा—

---

१. चोदना for विधिः J

अग्निहोत्रं जुहुयात् स्वर्गकामः [मै. उप. ६/३६]

इत्यादि ॥६३ ॥

[**वा** पृः २५६; **टी** पृः ३८०; **प** पृः ३८७]

## स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः ॥२।१।६४॥

विधेः फलवादलक्षणा प्रशंसा स्तुतिः सम्प्रत्ययार्था, स्तूयमानं श्रद्दधीतेति। प्रवर्तिका च। फलश्रवणात् प्रवर्तते।

सर्वजिता वै देवाः सर्वमजयन् सर्वस्याप्त्यै सर्वस्य जित्यै, सर्वमेवैतेनाप्नोति सर्वं जयतीत्येवमादि। [ताण्ड्यब्राह्मणम् १६।७।२]।

अनिष्टफलवादो निन्दा वर्जनार्था, निन्दितं न समाचरेदिति—

एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वाथान्येन यजते, गर्तपत्यमेव तज्जीयते वा प्र वा मीयते इत्येवमादि [ताण्ड्यब्राह्मणम् १६।१]।

अन्यकर्तृकस्य व्याहतस्य विधेर्वादः परकृतिः।

हुत्वा वपामेवाग्रेऽभिघारयन्ति, अथ पृषदाज्यम्, तदु ह चरकाध्वर्यवः पृषदाज्यमेवाग्रेऽभिघारयन्ति—

अग्नेः प्राणाः पृषदाज्यस्तोममित्येवमभिदधति इत्येवमादि [ ]।

ऐतिह्यसमाचरितो विधिः पुराकल्प इति।

तस्माद् वा एतेन पुरा ब्राह्मणा बहिष्पवमानं साममस्तौषन् योनेर्यज्ञं प्रतनवामहे इत्येवमादि [ ]।

कथं परकृतिपुराकल्पावर्थवादाविति? स्तुतिनिन्दावाक्येनाभिसम्बन्धाद् विध्याश्रयस्य वाक्यस्य[1] कस्यचिदर्थस्य द्योतनादर्थवादाविति[2] ॥६४॥

---

१. वाक्यस्य J २. अर्थवाद इति TC; अवद्योतनाद॰ J

[**वा** पृः २५६; **टी** पृः ३८१; **प** पृः ३८७]

## विधिविहितस्यानुवचनमनुवादः ॥२।१।६५॥

विध्यनुवचनं चानुवादो विहितानुवचनं च। पूर्वः शब्दानुवादः, परश्चार्थानुवादः। यथा पुनरुक्तं द्विविधमेवमनुवादोऽपि। किमर्थं पुनर्विहितमनूद्यते? अधिकारार्थम्, विहितमधिकृत्य स्तुतिर्बोध्यते निन्दा वा, विधिशेषो वाभिधीयते[१]। विहितानन्तरार्थोऽपि चानुवादो भवति, एवमन्यदप्युत्प्रेक्षणीयम्[२]।

लोकेऽपि च विधिरर्थवादोऽनुवाद इति च त्रिविधं वाक्यम्। ओदनं पचेदिति विधिवाक्यम्। अर्थवादवाक्यम्—आयुर्वर्चो बलं सुखं प्रतिभानं चान्ने प्रतिष्ठितम् इति। अनुवादः पचतु पचतु भवान् इत्यभ्यासः, [३]क्षिप्रं पच्यतामिति क्रियातिशयोऽभ्यासेनैवोच्यते। अङ्ग पच्यतामित्यध्येषणार्थम्। पच्यतामेवेति चावधारणार्थम्।

यथा लौकिके वाक्ये विभागेनार्थग्रहणात् [४]प्रमाणत्वम्, एवं वेदवाक्यानामपि विभागेनार्थग्रहणात् प्रमाणं भवितुमर्हतीति ॥६५॥

[**वा** पृः २५६; **टी** पृः ३८३; **प** पृः ३८७]

## नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः ॥२।१।६६॥

पुनरुक्तमसाधु, साधुरनुवाद इत्ययं विशेषो नोपपद्यते। कस्मात्? उभयत्र हि प्रतीतार्थः शब्दोऽभ्यस्यते। चरितार्थस्य च शब्दस्याभ्यासादुभयमसाध्विति ॥६६॥

---

१. विधीयते J  २. °प्रेक्षितव्यम् J  ३. °मिति वा अङ्ग .....TC
४. प्रमाणशब्दः J

[वा पृः २५६; टी पृः ३८३; प पृः ३८७]

**शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेषः ॥२।१।६७॥**

नानुवादपुनरुक्तयोरविशेषः। कस्मात्? अर्थवतोऽभ्यासस्यानुवादभावात्। [1]समानेऽभ्यासे पुनरुक्तमनर्थकम्। अर्थवानभ्यासोऽनुवादः। शीघ्रतरगमनोपदेशवत्। शीघ्रं शीघ्रं गम्यतां शीघ्रतरं गम्यतामिति क्रियातिशयोऽभ्यासेनैवोच्यते। उदाहरणार्थं चेदम्। एवमन्येऽप्यभ्यासाः, पचति पचतीति क्रियानुपरमः। ग्रामो ग्रामो रमणीय इति व्याप्तिः। परि परि त्रिगर्तेभ्यो वृष्टो देव इति परिवर्जनम्। अध्यधिकुड्यं निषण्णमिति सामीप्यम्। [2]तिक्ततिक्तं भुक्तमिति च तिक्तप्रकारमिति। एवमनुवादस्य स्तुतिनिन्दाशेषविधिष्वधिकारार्थता विहितानन्तरार्थताश्चानुवाद इति ॥६७॥

[वा पृः २५७; टी पृः ३८३; प पृः ३८७]

किं पुनः प्रतिषेधहेतूद्धारादेव शब्दस्य प्रमाणत्वं सिध्यति? न, अतश्च—

**मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्॥२।१।६८॥**

किं पुनरायुर्वेदस्य प्रामाण्यम्? यत् तदायुर्वेदेनोपदिश्यत इदं कृत्वेष्टमधिगच्छति इदं वर्जयित्वानिष्टं जहाति, तस्यानुष्ठीयमानस्य तथाभावः सत्यार्थताऽविपर्ययः। मन्त्रपदानां च विषभूताशनिप्रतिषेधार्थानां प्रयोगेऽर्थस्य तथाभाव एतत्प्रामाण्यम्। किंकृतमेतत्? आप्तप्रामाण्यकृतम्। किं पुनराप्तानां प्रामाण्यम्? साक्षात्कृतधर्मता भूतदया यथाभूतार्थचिख्यापयिषा चेति। आप्ताः खलु साक्षात्कृतधर्माण इदं

---

१. समाने .....नर्थकम् Om TC  २. तिक्तं तिक्तमिति प्रकारः C

हातव्यमयमस्य हानिहेतुरिदमस्याधिगन्तव्यमयमस्याधिगमहेतुरिति भूतान्यनुकम्पन्ते। एतेषां खलु वै प्राणभृतां स्वयमनवबुध्यमानानां नान्यदुपदेशादवबोधकारणमस्ति। न चानवबोधे समीहा वर्जनं वा, न वाऽकृत्वा स्वस्तिभावः, नाप्यन्योऽस्योपकारको[१] हेतुरुपदेशादृते। हन्त वयमेभ्यो यथादर्शनं यथाभूतमुपदिशामः। त इमे श्रुत्वा प्रतिपद्यमाना हेयं हास्यन्त्यधिगन्तव्यं चाधिगमिष्यन्तीति। एवमयमाप्तोपदेश एतेन त्रिविधेनाप्तप्रामाण्येन परिगृहीतोऽनुष्ठीयमानोऽर्थस्य साधको भवति। एवमाप्तोपदेशः प्रमाणम्। एवं चाप्तः प्रमाणम्।

दृष्टार्थेनाप्तोपदेशेनायुर्वेदेनादृष्टार्थो वेदभागोऽनुमातव्यः प्रमाणमिति, आप्तप्रामाण्यस्य हेतोः समानत्वादिति। अस्यापि चैकदेशो

ग्रामकामो यजेत

इत्येवमादिर्दृष्टार्थः। तेन चानुमातव्यमिति।

लोके च भूयानुपदेशाश्रयो व्यवहारः। लौकिकस्यापि चोपदेष्टुरुपदेष्टव्यार्थज्ञानेन, परानुजिघृक्षया यथाभूतार्थचिख्यापयिषया च प्रामाण्यम्। तत्परिग्रहाच्चाप्तोपदेशः प्रमाणमिति।

द्रष्टृप्रवक्तृसामान्याच्चानुमानम्। य एवाप्ता वेदार्थानां द्रष्टारः प्रवक्तारश्च त एवायुर्वेदप्रभृतीनामपि इत्यायुर्वेदप्रामाण्यवद् वेदप्रामाण्यमनुमातव्यमिति।

नित्यत्वाद् वेदवाक्यानां प्रमाणत्वे तत्प्रामाण्यमाप्तप्रामाण्यादित्ययुक्तम्। शब्दस्य वाचकत्वादर्थप्रतिपत्तौ प्रमाणत्वं न नित्यत्वात्। नित्यत्वे हि सर्वस्य सर्वेण वचनाच्छब्दार्थव्यवस्थानुपपत्तिः। [२]नानित्यत्वे वाचकत्वमिति चेत्? न, लौकिकेष्वदर्शनात्। तेऽपि नित्या इति चेत्? न, अनाप्तोपदेशादर्थविसंवादोऽनुपपन्नः। नित्यत्वाद्धि शब्दः प्रमाणमिति। अनित्यः स इति चेत्? अविशेषवचनम्। अनाप्तोपदेशो लौकिको न नित्य इति कारणं वाच्यमिति। यथानियोगं चार्थस्य

---

१. °कोऽप्यस्ति TC; हेतुरुपदेशादृते J only २. न Om J

प्रत्यायनान्नामधेयशब्दानां[१] लोके प्रामाण्यं[२] नित्यत्वात् प्रामाण्यानुपपत्तिः। यत्रार्थे नामधेयशब्दो नियुज्यते लोके तस्य नियोगसामर्थ्यात् प्रत्यायको भवति, न नित्यत्वादिति। मन्वन्तरचतुर्युगान्तरेषु चातीतानागतेषु सम्प्रदायाभ्यासप्रयोगाविच्छेदाद्[३] वेदानां नित्यत्वम्, आप्तप्रामाण्याच्च प्रामाण्यम्। लौकिकेषु च शब्देषु एतत् समानमिति॥६८॥

॥शब्दविशेषपरीक्षाप्रकरणम्॥

॥अवसितं सभाष्ये न्यायदर्शने द्वितीयाध्यायस्य प्रथमाह्निकम्॥

---

१. शब्देन J २. प्रामाण्यं Om J ३. °विच्छेदो TC

# द्वितीयाध्यायस्य द्वितीयाह्निकम्

## [ प्रमाणचतुष्ट्वपरीक्षाप्रकरणम् ]

[**वा** पृः २६१; **टी** पृः ३८८; **प** पृः ३९०]

अयथार्थः प्रमाणोद्देश इति मत्वेदमाह—

**न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात्॥२।२।१॥**

न चत्वार्येव प्रमाणानि। किं तर्हि? ऐतिह्यमर्थापत्तिः सम्भवोऽभाव इत्येतान्यपि प्रमाणानि। तानि कस्मान्नोच्यन्त इति[१]। इति होचुरित्यनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमैतिह्यम्। अर्थादापत्तिरर्थापत्तिः। आपत्तिः[२] प्राप्तिप्रसङ्गः। यत्राभिधीयमानेऽर्थे योऽन्योऽर्थः प्रसज्यते सोऽर्थापत्तिः। यथा मेघेष्वसत्सु वृष्टिर्न भवतीति उक्ते किमत्र प्रसज्यते? सत्सु भवतीति। सम्भवो नामाविनाभाविनोऽर्थस्य सत्ताग्रहणादन्यस्य सत्ताग्रहणम्। यथा द्रोणस्य सत्ताग्रहणादाढकस्य सत्ताग्रहणम्, आढकस्य च सत्ताग्रहणात् प्रस्थस्येति। अभावो

**विरोध्यभूतं भूतस्य [ वै.सू. ( च ) ३।१।८ ]।**

अविद्यमानं वर्षकर्म विद्यमानस्य वाय्वभ्रसंयोगस्य प्रतिपादकम्। विधारके हि वाय्वभ्रसंयोगे गुरुत्वादपां पतनकर्म न भवतीति॥१॥

[**वा** पृः २६२; **टी** पृः ३८९; **प** पृः ३९१]

सत्यमेतानि प्रमाणानि, न तु प्रमाणान्तराणि। प्रमाणान्तरभावं च मन्यमानेन प्रतिषेध उच्यते। सोऽयम्—

---

१. °न्नोक्तानि? TC  २. प्राप्तिः प्र° TC

प्रत्यायनान्नामधेयशब्दानां[१] लोके प्रामाण्यं[२] नित्यत्वात् प्रामाण्यानुपपत्तिः। यत्रार्थे नामधेयशब्दो नियुज्यते लोके तस्य नियोगसामर्थ्यात् प्रत्यायको भवति, न नित्यत्वादिति। मन्वन्तरचतुर्युगान्तरेषु चातीतानागतेषु सम्प्रदायाभ्यासप्रयोगाविच्छेदाद्[३] वेदानां नित्यत्वम्, आप्तप्रामाण्याच्च प्रामाण्यम्। लौकिकेषु च शब्देषु एतत् समानमिति ॥६८॥

॥शब्दविशेषपरीक्षाप्रकरणम्॥

॥अवसितं सभाष्ये न्यायदर्शने द्वितीयाध्यायस्य प्रथमाह्निकम्॥

१. शब्देन J   २. प्रामाण्यं Om J   ३. ॰विच्छेदो TC

# द्वितीयाध्यायस्य द्वितीयाह्निकम्

## [ प्रमाणचतुष्ट्वपरीक्षाप्रकरणम् ]

[**वा** पृः २६१; **टी** पृः ३८८; **प** पृः ३९०]

अयथार्थः प्रमाणोद्देश इति मत्वेदमाह—

**न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात्॥२।२।१॥**

न चत्वार्येव प्रमाणानि। किं तर्हि? ऐतिह्यमर्थापत्तिः सम्भवोऽभाव इत्येतान्यपि प्रमाणानि। तानि कस्मान्नोच्यन्त इति[१]। इति होचुरित्यनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमैतिह्यम्। अर्थादापत्तिरर्थापत्तिः। आपत्तिः[२] प्राप्तिप्रसङ्गः। यत्राभिधीयमानेऽर्थे योऽन्योऽर्थः प्रसज्यते सोऽर्थापत्तिः। यथा मेघेष्वसत्सु वृष्टिर्न भवतीति उक्ते किमत्र प्रसज्यते? सत्सु भवतीति। सम्भवो नामाविनाभाविनोऽर्थस्य सत्ताग्रहणादन्यस्य सत्ताग्रहणम्। यथा द्रोणस्य सत्ताग्रहणादाढकस्य सत्ताग्रहणम्, आढकस्य च सत्ताग्रहणात् प्रस्थस्येति। अभावो

**विरोध्यभूतं भूतस्य [ वै.सू. ( च ) ३।१।८ ]।**

अविद्यमानं वर्षकर्म विद्यमानस्य वाय्वभ्रसंयोगस्य प्रतिपादकम्। विधारके हि वाय्वभ्रसंयोगे गुरुत्वादपां पतनकर्म न भवतीति॥१॥

[**वा** पृः २६२; **टी** पृः ३८९; **प** पृः ३९१]

सत्यमेतानि प्रमाणानि, न तु प्रमाणान्तराणि। प्रमाणान्तरभावं च मन्यमानेन प्रतिषेध उच्यते। सोऽयम्—

---

१. ॰न्नोक्तानि? TC २. प्राप्तिः प्र॰ TC

**शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवाभावानर्थान्तरभावाच्चाप्रतिषेधः ॥२।२।२॥**

अनुपपन्नः प्रतिषेधः। कथम्?

**आप्तोपदेशः शब्दः** [ १।१।७ ]

इति न शब्दलक्षणमैतिह्याद् व्यावर्तते। सोऽयं भेदः सामान्यात् संगृहीत इति। प्रत्यक्षेणाप्रत्यक्षस्य सम्बद्धस्य प्रतिपत्तिरनुमानम्। तथा चार्थापत्तिसम्भवाभावाः। वाक्यार्थसम्प्रत्ययेनानभिहितस्यार्थस्य प्रत्यनीकभावाद् ग्रहणमर्थापत्तिरनुमानमेव। अविनाभाववृत्त्या च सम्बद्धयोः समुदायसमुदायिनोः समुदायेनेतरस्य ग्रहणं [१]सम्भवः। तदप्यनुमानमेव। अस्मिन् सतीदं नोपपद्यत इति विरोधित्वे प्रसिद्धे कार्यानुत्पत्त्या कारणस्य प्रतिबन्धकमनुमीयते। सोऽयं यथार्थ एव प्रमाणोद्देश इति॥२॥

[**वा** पृः २६४; **टी** पृः ३९०; **प** पृः ३९२]

सत्यमेतानि प्रमाणानि, न तु प्रमाणान्तराणीत्युक्तम्, तत्रार्थापत्तेः प्रमाणभावाभ्यनुज्ञा नोपपद्यते। तथा हीयम्—

**अर्थापत्तिरप्रमाणमनैकान्तिकत्वात्॥२।२।३॥**

असत्सु मेघेषु वृष्टिर्न भवतीति सत्सु भवतीत्येतदर्थादापद्यते। सत्स्वपि चैकदा न भवति। [२]सेयमनैकान्तिक्यर्थापत्तिरप्रमाणमिति॥३॥

---

१. सम्भवः .......मेव। Om J   २. नैकान्तिक्य° J only

[**वा** पृः २६४; **टी** पृः ३९१; **प** पृः ३९२]

नानैकान्तिकत्वमर्थापत्तेः—

**अनर्थापत्तावर्थापत्त्यभिमानात्॥२।२।४॥**

असति कारणे कार्यं नोत्पद्यत इति वाक्यात् प्रत्यनीकभूतोऽर्थः सति कारणे कार्यमुत्पद्यत इत्यर्थादापद्यते। अभावस्य हि भावः प्रत्यनीक इति। सोऽयं कार्योत्पादः सति कारणेऽर्थादापद्यमानो न कारणस्य सत्तां व्यभिचरति। न खल्वसति कारणे कार्यमुत्पद्यते तस्मान्नानैकान्तिकी।

यत्तु सति कारणे निमित्तप्रतिबन्धात् कार्यं नोत्पद्यत इति कारणधर्मोऽसौ, [१]न तदर्थापत्तेः प्रमेयम्। किं तर्ह्यस्याः प्रमेयम्? सति कारणे कार्यमुत्पद्यत इति। योऽसौ कार्योत्पादः स कारणसत्तां न व्यभिचरति। तदस्याः प्रमेयम्। एवं तु सत्यनर्थापत्तावर्थापत्त्यभिमानं कृत्वा प्रतिषेध उच्यत इति। दृष्टश्च कारणधर्मो न शक्यः प्रत्याख्यातुमिति॥४॥

[**वा** पृः २६५; **टी** पृः ३९१; **प** पृः ३९२]

**प्रतिषेधाप्रामाण्यं चानैकान्तिकत्वात्॥२।२।५॥**

अर्थापत्तिरप्रमाणम् अनैकान्तिकत्वादिति वाक्यं प्रतिषेधः। तेनार्थापत्तेः प्रमाणत्वं प्रतिषिध्यते न सद्भावः। एवमनैकान्तिको भवति प्रतिषेधः[२]। अनैकान्तिकत्वादप्रमाणम्। नानेन[३] कश्चिदर्थः प्रतिषिध्यत इति॥५॥

---

१. न त्वर्था॰ TC	२. प्रतिषेधः adds J	३. ॰त्वादप्रमाणेनानेन न TC

[**वा** पृः २६५; **टी** पृः ३९१; **प** पृः ३९२]

अथ मन्यसे नियतविषयेष्वर्थेषु स्वविषये व्यभिचारो भवति। न च प्रतिषेधस्य सद्भावो विषय इति। एवं तर्हि—

**तत्प्रामाण्ये वा नार्थापत्त्यप्रामाण्यम् ॥२।२।६॥**

अर्थापत्तेरपि [१]तर्हि कार्योत्पादेन कारणसत्ताया अव्यभिचारो विषयः। न च कारणधर्मो निमित्तप्रतिबन्धात् कार्यानुत्पादकत्वमिति ॥६॥

[**वा** पृः २६६; **टी** पृः ३९२; **प** पृः ३९३]

अभावस्य तर्हि प्रमाणभावाभ्यनुज्ञा नोपपद्यते कथमिति?

**नाभावप्रामाण्यं प्रमेयासिद्धेः ॥२।२।७॥**

अभावस्य भूयसि प्रमेये लोकप्रसिद्धे वैयात्यादिदमुच्यते नाभावप्रामाण्यं प्रमेयासिद्धेरिति ॥७॥

[**वा** पृः २६६; **टी** पृः ३९३; **प** पृः ३९३]

अथायमर्थबहुत्वादर्थैकदेश उदाह्रियते—

**लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धिः ॥२।२।८॥**

---

१. तर्हि Om TC

तस्याभावस्य सिध्यति प्रमेयम्। कथम्? लक्षितेषु वासःसु अनुपादेयेषु उपादेयानामलक्षितानामलक्षणलक्षितत्वाद् लक्षणाभावेन लक्षितत्वाद् उभयसन्निधावलक्षितानि वासांस्यानयेति प्रयुक्तो येषु वासःसु लक्षणानि न भवन्ति, तानि लक्षणाभावेन प्रतिपद्यते। प्रतिपद्य चानयति। प्रतिपत्तिहेतुश्च प्रमाणमिति॥८॥

[**वा** पृः २६६; **टी** पृः ३९३; **प** पृः ३९३]

**असत्यर्थे नाभाव इति चेन्नान्यलक्षणोपपत्तेः॥२।२।९॥**

यत्र भूत्वा किञ्चिन्न भवति तत्र तस्याभाव उपपद्यते। न चालक्षितेषु वासःसु लक्षणानि भूत्वा न भवन्ति। तस्मात् तेषु लक्षणाभावोऽनुपपन्न इति। नान्यलक्षणोपपत्तेः—यथायमन्येषु वासःसु लक्षणानामुपपत्तिं पश्यति, नैवमलक्षितेषु। सोऽयं लक्षणानामभावं पश्यन्नभावेनार्थं प्रतिपद्यत इति॥९॥

[**वा** पृः २६७; **टी** पृः ३९४; **प** पृः ३९४]

**तत्सिद्धेरलक्षितेष्वहेतुः॥२।२।१०॥**

तेषु वासःसु लक्षितेषु सिद्धिर्विद्यमानता येषां भवति न तेषामभावो लक्षणानाम्। यानि च लक्षितेषु विद्यन्ते लक्षणानि तेषामलक्षितेष्वभाव इत्यहेतुः। यानि च खलु भवन्ति तेषामभावो व्याहत इति॥१०॥

[**वा** पृः २६७; **टी** पृः ३९४; **प** पृः ३९४]

**न, लक्षणावस्थितापेक्षसिद्धेः॥२।२।११॥**

न ब्रूमो यानि लक्षणानि भवन्ति तेषामभाव इति। किं तु केषुचिल्लक्षणान्यवस्थितानि, [१]अनवस्थितानि केषुचित्। अपेक्षमाणो येषु लक्षणानां भावं न पश्यति, तानि लक्षणाभावेन प्रतिपद्यत इति ॥११॥

[**वा** पृः २६७; **टी** पृः ३९४; **प** पृः ३९४]

**प्रागुत्पत्तेरभावोपपत्तेश्च ॥२।२।१२॥**

अभावद्वैतं खलु भवति। प्राक् चोत्पत्तेरविद्यमानता, उत्पन्नस्य चात्मनो हानादविद्यमानता। तत्रालक्षितेषु वासःसु प्रागुत्पत्तेरविद्यमानतालक्षणो लक्षणानामभावो नेतर इति ॥१२॥

॥प्रमाणचतुष्टयपरीक्षाप्रकरणम्॥

## [ शब्दानित्यत्वप्रकरणम् ]

[**वा** पृः २६८; **टी** पृः ३९५; **प** पृः ३९५]

**आप्तोपदेशः शब्दः [ १।१।७ ]**

इति प्रमाणभावे विशेषणं ब्रुवता नानाप्रकारः शब्द इति ज्ञाप्यते। तस्मिन् सामान्येन विचारः किं नित्योऽथानित्य इति।

विमर्शहेत्वनुयोगे च विप्रतिपत्तेः संशयः। आकाशगुणः शब्दो [२]विभुर्नित्योऽभिव्यक्तिधर्मक **इत्येके**[३]। गन्धादिसहवृत्तिर्द्रव्येषु सन्निविष्टो गन्धादिवदवस्थितोऽभिव्यक्तिधर्मक **इत्यपरे**[४]। आकाशगुणः शब्द उत्पत्तिनिरोधधर्मको

---

१. अनव........चित् Om J   २. विभूत्ववन्नि॰ J   ३. जरन्मीमांसकाः J margin
४. सांख्याः J margin

बुद्धिवदित्य**परे**[१]। महाभूतसंक्षोभजः शब्दोऽनाश्रित उत्पत्तिधर्मको निरोधधर्मक इति **चान्ये**[२]। अतः संशयः किमत्र तत्त्वमिति।

अनित्यः शब्द इत्येतत् तत्त्वम्[३]। कथम्—

## आदिमत्त्वादैन्द्रियकत्वात्कृतकवदुपचाराच्च॥२।२।१३॥

आदिर्योनिः कारणमादीयतेऽस्मादिति। कारणवदनित्यं दृष्टम्, संयोगविभागजश्च शब्दः। स च कारणवत्त्वादनित्य इति। का पुनरियमर्थदेशना कारणवत्त्वादिति? उत्पत्तिधर्मकत्वादिति। अनित्यः शब्द इति भूत्वा न भवति विनाशधर्मक इति।

सांशयिकमेतत्—किमुत्पत्तिकारणं संयोगविभागौ शब्दस्य, आहोस्विदभिव्यक्तिकारणमित्यत आह—ऐन्द्रियकत्वात्। इन्द्रियप्रत्यासत्तिग्राह्य ऐन्द्रियकः।

किमयं व्यञ्जकेन समानदेशोऽभिव्यज्यते रूपादिवत्? अथ संयोगजाच्छब्दाच्छब्दसन्ताने सति श्रोत्रप्रत्यासन्नो गृह्यत इति? संयोगनिवृत्तौ शब्दग्रहणात् न व्यञ्जकेन समानदेशस्य ग्रहणम्—दारुव्रश्चने दारुपरशुसंयोगनिवृत्तौ दूरस्थेन शब्दो गृह्यते। न च व्यञ्जकाभावे व्यङ्ग्यस्य ग्रहणं भवति। तस्मान्न व्यञ्जकः संयोगः। उत्पादके तु संयोगे संयोगजाच्छब्दाच्छब्दसन्ताने सति श्रोत्रप्रत्यासन्नस्य ग्रहणमिति युक्तं संयोगनिवृत्तौ शब्दस्य ग्रहणमिति।

इतश्च शब्द उत्पद्यते, नाभिव्यज्यते—कृतकवदुपचारात्। तीव्रं मन्दमिति कृतकमुपचर्यते, तीव्रं सुखं मन्दं सुखं तीव्रं दुःखं मन्दं दुःखमिति। उपचर्यते च तीव्रः शब्दो मन्दः शब्द इति।

व्यञ्जकस्य तथाभावाद् ग्रहणस्य तीव्रमन्दता रूपवदिति चेत्—न,

---

१. वैशेषिकाः J margin २. बौद्धाः J margin ३. इत्युत्तरम् for इत्येतत् तत्त्वम् TC

अभिभवोपपत्तेः। संयोगस्य व्यञ्जकस्य तीव्रमन्दतया शब्दग्रहणस्य तीव्रमन्दता भवति, न तु शब्दो भिद्यते यथा प्रकाशस्य तीव्रमन्दतया रूपग्रहणस्येति। तच्च नैवमभिभवोपपत्तेः। तीव्रो भेरीशब्दो मन्दं तन्त्रीशब्दमभिभवति, न मन्दः। न च शब्दग्रहणमभिभावकम्, शब्दश्च न भिद्यते सोऽयमभिभवो नोपपद्यते[१]। शब्दे तु भिद्यमाने युक्तोऽभिभवः। तस्मादुत्पद्यते शब्दो नाभिव्यज्यत इति।

अभिभवानुपपत्तिश्च व्यञ्जकसमानदेशस्याभिव्यक्तौ प्राप्त्यभावाद् व्यञ्जकेन समानदेशोऽभिव्यज्यते शब्द इत्येतस्मिन् पक्षे नोपपद्यतेऽभिभवः। न हि भेरीशब्देन तन्त्रीस्वनः प्राप्त इति।

अप्राप्तेऽभिभव इति चेत्, शब्दमात्राभिभवप्रसङ्गः। अथ मन्येत असत्यां प्राप्तावभिभवो भवतीति, एवं सति यथा भेरीशब्दः कञ्चित्तन्त्रीस्वनमभिभवति एवमन्तिकस्थोपादानानिव दवीयस्थोपादानानपि तन्त्रीस्वनानभिभवेद् अप्राप्तेर-विशेषात्। तत्र क्वचिदेव भेर्यां प्रणादितायां सर्वलोकेषु समानकालास्तन्त्रीस्वना न श्रूयेरन्निति। नानाभूतेषु तु शब्दसन्तानेषु सत्सु श्रोत्रप्रत्यासत्तिभावेन कस्यचिच्छब्दस्य[२] तीव्रेण मन्दस्याभिभवो युक्त इति। कः पुनरयमभिभवो नाम? ग्राह्यस्य [३]समानजातीयग्रहणकृतमग्रहणम् अभिभवः। यथोल्काप्रकाशस्य ग्रहणार्हस्य आदित्यप्रकाशेनेति ॥१३॥

[**वा** पृः २७९; **टी** पृः ४०५; **प** पृः ४०१]

**न घटाभावसामान्यनित्यत्वान्नित्येष्वप्यनित्यवदुपचाराच्च ॥२। २।१४॥**

न खलु आदिमत्त्वादनित्यः शब्दः। कस्मात्? व्यभिचारात्। आदिमतः खलु

---

१. सोऽयमभि....पद्यते J only २. ॰प्रत्यासत्तावनेकस्य शब्दस्य J ३. ॰जातीयकृत॰ J

घटाभावस्य दृष्टं नित्यत्वम्। कथमादिमान्? कारणविभागेभ्यो हि घटो न भवति। कथमस्य नित्यत्वम्? योऽसौ कारणविभागेभ्यो न भवति न तस्याभावो भावेन कदाचिन्निवर्त्यत इति। यदप्यैन्द्रियकत्वाद् इत्येतदपि व्यभिचरति, ऐन्द्रियकं च सामान्यं नित्यं चेति। यदपि कृतकवदुपचाराच्चेति, एतदपि व्यभिचरति। नित्येष्वनित्यवदुपचारो दृष्टः—यथा हि भवति वृक्षस्य प्रदेशः कम्बलस्य प्रदेश इति, एवमाकाशस्य प्रदेश आत्मनः प्रदेश इति भवतीति॥१४॥

[**वा** पृः २७९; **टी** पृः ४०५; **प** पृः ४०१]

**तत्त्वभाक्तयोर्नानात्वस्य विभागादव्यभिचारः॥२।२।१५॥**

नित्यमित्यत्र किं तावत् तत्त्वम्? [१]अर्थान्तरस्यानुत्पत्तिधर्मकस्यात्महानानुपपत्तिर्नित्यत्वम्[२]। तच्चाभावे नोपपद्यते। भाक्तं तु भवति। यत् तत्रात्मानमहासीद् यद् भूत्वा न भवति, न जातु तत् पुनर्भवतीति, तत्र नित्य इव नित्यो घटाभाव इत्ययं पदार्थ इति। तत्र यथाजातीयकः शब्दो न तथाजातीयकं कार्यं किञ्चिन्नित्यं दृश्यत इत्यव्यभिचारः॥१५॥

[**वा** पृः २७९; **टी** पृः ४०६; **प** पृः ४०१]

यदपि सामान्यनित्यत्वादिति, इन्द्रियप्रत्यासत्तिग्राह्यम् ऐन्द्रियकमिति—

**सन्तानानुमानविशेषणात्॥२।२।१६॥**

---

१. आत्मान्त॰ JC var  २. ॰नुत्पत्ति॰ J

नित्येष्वव्यभिचार इति प्रकृतम्। [१]नेन्द्रियग्रहणसामर्थ्याच्छब्दस्यानित्यत्वम्। किं तर्हि? इन्द्रियप्रत्यासत्तिग्राह्यत्वात् सन्तानानुमानम्, तेनानित्यत्वमिति ॥१६॥

[**वा** पृः २८०; **टी** पृः ४०६; **प** पृः ४०१]

यदपि नित्येष्वप्यनित्यवदुपचारादिति, न[२]

**कारणद्रव्यस्य प्रदेशशब्देनाभिधानात्॥२।२।१७॥**

नित्येष्वप्यव्यभिचार इति। एवमाकाशप्रदेश आत्मप्रदेश इति नात्राकाशात्मनोः कारणद्रव्यमभिधीयते यथा कृतकस्य। कथं ह्यविद्यमानमभिधीयते, अविद्यमानता च प्रमाणतोऽनुपलब्धेः। किं तर्हि तत्राभिधीयते? संयोगस्याव्याप्यवृत्तित्वम्। परिच्छिन्नेन द्रव्येणाकाशस्य संयोगो नाकाशं व्याप्नोति, अव्याप्य वर्तत इति। तदस्य कृतकेन द्रव्येण सामान्यम्। न ह्यामलकयोः संयोग आश्रयं व्याप्नोतीति। सामान्यकृता च भक्तिराकाशस्य प्रदेश इति। एतेनात्मप्रदेशो व्याख्यातः। संयोगवच्च शब्दबुद्ध्यादीनामव्याप्यवृत्तित्वं वाच्यमिति[३]। परीक्षिता च तीव्रमन्दता शब्दस्य तत्त्वं न भक्तिकृतेति।

कस्मात् पुनः **सूत्रकार**स्यास्मिन्नर्थे सूत्रं न श्रूयत इति? शीलमिदं भगवतः **सूत्रकार**स्य बहुष्वधिकरणेषु द्वौ पक्षौ न [४]प्रतिष्ठापयति। तत्र शास्त्रसिद्धान्तात् तत्त्वावधारणं प्रतिपत्तुमर्हतीति मन्यते। शास्त्रसिद्धान्तस्तु न्यायसमाख्यातमनुमतं बहुशाखमनुमानमिति ॥१७॥

[**वा** पृः २८३; **टी** पृः ४०८; **प** पृः ४०३]

अथापि खल्विदमस्ति इदं नास्तीति कुत एतत् प्रतिपत्तव्यमिति? प्रमाणत

---

१. मात्रात् for सामर्थ्यात् J    २. न Om J    ३. वाच्यम् Om TC
४. व्यवस्थापयति TC

उपलब्धेरनुपलब्धेश्चेति। अविद्यमानस्तर्हि शब्दः—

**प्रागुच्चारणादनुपलब्धेरावरणाद्यनुपलब्धेश्च ॥२।२।१८॥**

प्रागुच्चारणान्नास्ति शब्दः। कस्मात्? अनुपलब्धेः। सतोऽनुपलब्धिरावणादिभ्य इत्येतन्नोपपद्यते। कस्मात्? आवरणादीनामनुपलब्धिकारणानामग्रहणात्। अनेनावृतः शब्दो नोपलभ्यत इति, [१]अतिसन्निकृष्टो वा इन्द्रियव्यवधानाद् वेत्येवमाद्यनुपलब्धि-कारणं न गृह्यत इति। सोऽयमनुच्चारितो नास्तीति।

उच्चारणमस्य व्यञ्जकम्। तदभावात् प्रागुच्चारणादनुपलब्धिरिति [२]चेत्? किमिदमुच्चारणं नामेति? विवक्षाजनितेन प्रयत्नेन कौष्ठ्यस्य वायोः प्रेरितस्य कण्ठताल्वादिषु स्थानेषु[३] प्रतिघातः, यथास्थानं प्रतिघाताच्च वर्णाभिव्यक्तिरिति। संयोगविशेषो वै प्रतिघातः। प्रतिषिद्धं च संयोगस्य व्यञ्जकत्वम्। तस्मान्न व्यञ्जकाभावादग्रहणम्, अपि त्वभावादेवेति। सोऽयमुच्चार्यमाणः श्रूयते। श्रूयमाणश्चाभूत्वा भवतीति अनुमीयते ऊर्ध्वं चोच्चारणान्न श्रूयते। स भूत्वा न भवतीति अभावान्न श्रूयत इति। कथम्? आवरणाद्यनुपलब्धेरित्युक्तम्। तस्मादुत्पत्तिनिरोधधर्मकः[४] शब्द इति ॥१८॥

[**वा** पृः २८४; **टी** पृः ४०८; **प** पृः ४०३]

एवं च सति तत्त्वं पांशुभिरिवावाकिरन्निदमाह—

**तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः ॥२।२।१९॥**

---

१. असन्निकृष्टश्चेन्द्रिय° TC २. चेत् Om TC ३. °षु स्थानेषु Om TC
४. तिरोभाव for निरोध TC

यद्यनुपलम्भादावरणं नास्ति, आवरणानुपलब्धिरपि तर्ह्यनुपलम्भान्नास्तीति तस्या अभावादप्रतिषिद्धमावरणमिति। कथं पुनर्जानीते भवान् नावरणानुपलब्धिरुपलभ्यत इति? किमत्र ज्ञेयम्? प्रत्यात्मवेदनीयत्वात् समानम्। अयं खल्वावरणमनुपलभमानः प्रत्यात्ममेव संवेदयते नावरणमुपलभ इति, यथा कुड्येनावृतस्यावरणमुपलभमानः प्रत्यात्ममेव संवेदयते। सेयमावरणोपलब्धिवदावरणानुपलब्धिरपि संवेद्यैवेति। एवञ्च सत्यपहृतविषयमुत्तरं वाक्यमस्तीति[१] ॥१९॥

[**वा** पृः २८४; **टी** पृः ४०८; **प** पृः ४०४]

अभ्यनुज्ञावादेन तूच्यते जातिवादिना—

**अनुपलम्भादप्यनुपलब्धिसद्भावान्नावरणानुपपत्तिरनुपलम्भात्॥२।२।२०॥**

यथानुपलभ्यमानाप्यावरणानुपलब्धिरस्ति, एवमनुपलभ्यमानमप्यावरणमस्तीति। [२]यद्यभ्यनुजानाति भवाननुपलभ्यमानाप्यावरणानुपलब्धिरस्तीति, अभ्यनुज्ञाय च वदति, नास्त्यावरणम् अनुपलम्भादिति, एतस्मिन्नप्यभ्यनुज्ञावादे प्रतिपत्तिनियमो नोपपद्यत इति ॥२०॥

[**वा** पृः २८५; **टी** पृः ४०९; **प** पृः ४०४]

**अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥२।२।२१॥**

यदुपलभ्यते तदस्ति, यन्नोपलभ्यते तन्नास्तीति अनुपलम्भात्मकमसदिति

---

१. उत्तरवाक्यं भवतीति J  २. यद्यप्यनु॰ T

व्यवस्थितम्। उपलब्ध्यभावश्चानुपलब्धिरिति। सेयमभावत्वान्नोपलभ्यते। सच्च खल्वावरणम्, तस्योपलब्ध्या भवितव्यम्, न चोपलभ्यते। तस्मान्नास्तीति। तत्र यदुक्तं

**नावरणानुपपत्तिरनुपलम्भात्** [ २।२।२० ]

इत्येतदयुक्तमिति॥२१॥

[**वा** पृ: २८५; **टी** पृ: ४१०; **प** पृ: ४०४]

अथ शब्दस्य नित्यत्वं प्रतिजानानः कस्माद्धेतोः प्रतिजानीते?

**अस्पर्शत्वात् ॥२।२।२२॥**

अस्पर्शमाकाशं नित्यं च दृष्टमिति, तथा च शब्द इति ॥२२॥

[**वा** पृ: २८५; **टी** पृ: ४१०; **प** पृ: ४०४]

सोऽयमुभयतः सव्यभिचारः। स्पर्शवांश्चाणुर्नित्यः, अस्पर्शं च कर्मानित्यं दृष्टमिति। अस्पर्शत्वादित्येतस्य साध्यसाधर्म्येणोदाहरणम्—

**न कर्मानित्यत्वात् ॥२।२।२३॥**

[**वा** पृ: २८६; **टी** पृ: ४१०; **प** पृ: ४०५]

साध्यवैधर्म्येणोदाहरणम्—

**नाणुनित्यत्वात् ॥२।२।२४॥**

उभयस्मिन्नुदाहरणे व्यभिचारान्न हेतुः ॥२३-२४॥

[**वा** पृः २८६; **टी** पृः ४११; **प** पृः ४०५]

अयं तर्हि हेतुः—

**सम्प्रदानात् ॥२।२।२५॥**

सम्प्रदीयमानमवस्थितं दृष्टम्। सम्प्रदीयते च शब्द आचार्येणान्तेवासिने। तस्मादवस्थित इति॥२५॥

[**वा** पृः २८६; **टी** पृः ४११; **प** पृः ४०५]

**तदन्तरालानुपलब्धेरहेतुः॥२।२।२६॥**

येन सम्प्रदीयते यस्मै च, तयोरन्तरालेऽवस्थानमस्य [१]न केनचिल्लिङ्गेनोपलभ्यते। सम्प्रदीयमानो ह्ययमवस्थितः सम्प्रदातुरपैति सम्प्रदानं च प्राप्नोतीत्यवर्जनीयमेतदिति॥२६॥

[**वा** पृः २८६; **टी** पृः ४११; **प** पृः ४०६]

**अध्यापनादप्रतिषेधः ॥२।२।२७॥**

अध्यापनं लिङ्गं सम्प्रदानस्य[२]। असति सम्प्रदानेऽध्यापनं न स्यादिति॥२७॥

१. केन लिङ्गेनोप॰ TC      २. सम्प्रदानस्य J margin

[**वा** पृः २८७; **टी** पृः ४११; **प** पृः ४०६]

**उभयोः पक्षयोरन्यतरस्याध्यापनादप्रतिषेधः ॥२।२।२८॥**

समानमध्यापनमुभयोः पक्षयोः संशयानतिवृत्तेः[१], किमाचार्यस्थः शब्दोऽन्तेवासिनमापद्यते तदध्यापनम्, आहोस्विन्नृत्योपदेशवद् गृहीतस्यानुकरणमध्यापनमिति? एवमध्यापनमलिङ्गं सम्प्रदानस्येति॥२८॥

[**वा** पृः २८७; **टी** पृः ४११; **प** पृः ४०६]

अयं तर्हि हेतुः—

**अभ्यासात् ॥२।२।२९॥**

अभ्यस्यमानमवस्थितं दृष्टम्। पञ्चकृत्वः पश्यति दशकृत्वः[२] पश्यतीति रूपमवस्थितं पुनः पुनर्दृश्यते। भवति च शब्देऽभ्यासः—दशकृत्वोऽधीतोऽनुवाको विंशतिकृत्वोऽधीत इति। तस्मादवस्थितस्य पुनः पुनरुच्चारणमभ्यास इति॥२९॥

[**वा** पृः २८७; **टी** पृः ४११; **प** पृः ४०७]

**नान्यत्वेऽप्यभ्यासस्योपचारात् ॥२।२।३०॥**

[३]अन्यस्य[४] चाप्यभ्यासाभिधानं भवति, द्विर्नृत्यतु भवान्, त्रिर्नृत्यतु भवानिति, द्विरनृत्यत् त्रिरनृत्यत् द्विरग्निहोत्रं जुहोति, द्विर्भुङ्क्ते इति ॥३०॥

---

१. निवृत्तेः for अनतिवृत्तेः TC २. पश्यति दशकृत्वः added J ३. अनवस्थानेऽपि added CJ ४. अन्यस्यान्यस्य J

[**वा** पृः २८८; **टी** पृः ४११; **प** पृः ४०७]

एवं व्यभिचारात्[१] प्रतिषिद्धे हेतावन्यशब्दस्य प्रयोगः प्रतिषिध्यते—

**अन्यदन्यस्मादनन्यत्वादनन्यदित्यन्यताऽभावः ॥२।२।३१॥**

यदिदमन्यदिति मन्यसे तत् स्वात्मनोऽनन्यत्वादन्यन्न भवति। एवमन्यताया अभावः। तत्र यदुक्तम्

**अन्यत्वेऽप्यभ्यासोपचारात् [ २।२।३० ]**

इत्येतदयुक्तमिति ॥३१॥

[**वा** पृः २८८; **टी** पृः ४११; **प** पृः ४०७]

शब्दप्रयोगं प्रतिषेधतः शब्दान्तरप्रयोगः प्रतिषिध्यते—

**तदभावे नास्त्यनन्यता तयोरितरेतरापेक्षसिद्धेः ॥२।२।३२॥**

[२]अन्यस्यानन्यतामुपपादयति भवान्, उपपाद्य चान्यत् प्रत्याचष्टे अनन्यदिति च शब्दमनुजानाति, प्रयुङ्क्ते चानन्यदित्येतत्समासपदम् अन्यशब्दोऽयं प्रतिषेधेन सह समस्यते। यदि चात्रोत्तरं पदं नास्ति, कस्यायं प्रतिषेधेन सह समासः? तस्मात् तयोरन्यानन्यशब्दयोरितरोऽनन्यशब्द इतरमन्यशब्दमपेक्षमाणः सिध्यतीति तत्र यदुक्तमन्यताया अभाव इत्येतदयुक्तम् ॥३२॥

[**वा** पृः २८९; **टी** पृः ४१३; **प** पृः ४०७]

अस्तु तर्हीदानीं शब्दस्य नित्यत्वम्—

१. T reads एवं व्यभिचारात् at the end of the Bhāṣya of 2/2/30

२. अन्यस्मादन॰ TC

**विनाशकारणानुपलब्धेः ॥२।२।३३॥**

यदनित्यं तस्य विनाशः कारणाद् भवति, यथा लोष्टस्य कारणद्रव्यविभागात्। शब्दश्चेदनित्यस्तस्य विनाशो यस्मात् कारणाद् भवति तदुपलभ्येत, न चोपलभ्यते, तस्मान्नित्य इति ॥३३॥

[**वा** पृः २८९; **टी** पृः ४१३; **प** पृः ४०७]

**अश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्गः ॥२।२।३४॥**

यथा विनाशकारणानुपलब्धेरविनाशप्रसङ्ग एवमश्रवणकारणानुपलब्धेः सततं श्रवणप्रसङ्ग इति। व्यञ्जकाभावादश्रवणमिति चेत्? प्रतिषिद्धं व्यञ्जकम्। अथ विद्यमानस्य निर्निमित्तमश्रवणमिति [१]विद्यमानस्य निर्निमित्तो विनाश इति। समानश्च दृष्टविरोधो निमित्तमन्तरेण विनाशे चाश्रवणे चेति ॥३४॥

[**वा** पृः २९०; **टी** पृः ४१३; **प** पृः ४०८]

**उपलभ्यमाने चानुपलब्धेरसत्त्वादनपदेशः ॥२।२।३५॥**

अनुमानाच्चोपलभ्यमाने शब्दस्य विनाशकारणे विनाशकारणानुपलब्धेरसत्त्वादित्यनपदेशः। यथा

**यस्माद् विषाणी तस्मादश्वः [ द्रः वै. सू. ( च ) ३।१।१२ ]**

---

१. अविद्यमानस्य T

इति। किमनुमानमिति चेत्? सन्तानोपपत्तिः। उपपादितः शब्दसन्तानः संयोगविभागजाच्छब्दाच्छब्दान्तरम्। ततोऽन्यत्ततोऽप्यन्यदिति। तत्र कार्यः शब्दः कारणशब्दं निरुणद्धि। प्रतिघातिद्रव्यसंयोगस्त्वन्त्यस्य शब्दस्य निरोधकः। दृष्टं च तिरःप्रतिकुड्यमन्तिकस्थेनाप्यश्रवणं शब्दस्य, श्रवणं च दूरस्थेनाप्यसति व्यवधान इति।

घण्टायामभिहन्यमानायां तारस्तारतरो मन्दो मन्दतर इति श्रुतिभेदान्नाना-शब्दसन्तानोऽविच्छेदेन श्रूयते। तत्र नित्ये शब्दे घण्टास्थमन्यगतं वावस्थितं सन्तानवृत्ति वाभिव्यक्तिकारणं वाच्यम्, येन चिरं श्रुतिसन्तानो भवतीति। शब्दभेदे चासति श्रुतिभेद उपपादयितव्य इति। अनित्ये तु शब्दे घण्टास्थं सन्तानवृत्ति संयोगसहकारि निमित्तान्तरं संस्कारभूतं पटु मन्दमनुवर्तते। तस्यानुवृत्त्या शब्दसन्तानानुवृत्तिः। पटुमन्दभावाच्च तीव्रमन्दता शब्दस्य। तत्कृतश्च श्रुतिभेद इति ॥३५॥

[**वा** पृः २९२; **टी** पृः ४१६; **प** पृः ४०८]

न वै निमित्तान्तरं संस्कारभूतमुपलभ्यते। अनुपलब्धेर्नास्तीति।

## पाणिनिमित्तप्रश्लेषाच्छब्दाभावे नानुपलब्धिः ॥२।२।३६॥

पाणिकर्मणा पाणिघण्टाप्रश्लेषो भवति। तस्मिंश्च सति शब्दसन्तानो [१]नोपपद्यते। अतः श्रवणानुपपत्तिः[२]। तत्र प्रतिघातिद्रव्यसंयोगः शब्दस्य निमित्तान्तरं संस्कारभूतं निरुणद्धीत्यनुमीयते। तस्य च निरोधाच्छब्दसन्तानो नोत्पद्यते। अनुत्पत्तौ च श्रुतिविच्छेदः। यथा प्रतिघातिद्रव्यसंयोगादिषोः क्रियाहेतौ संस्कारे निरुद्धे

---

१. नोत्पद्यते TC    २. श्रवणानुबन्धो विच्छिद्यते J

गमनाभाव इति। कम्पसन्तानस्य च स्पर्शनेन्द्रियग्राह्यस्य उपरमः। कांस्यपात्रादिषु पाणिसंश्लेषो लिङ्गं संस्कारसन्तानस्येति। तस्मान्निमित्तान्तरस्य संस्कारभूतस्य नानुपलब्धिरिति ॥३६ ॥

[**वा** पृः २९२; **टी** पृः ४१६; **प** पृः ४०८]

**विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः ॥२।२।३७॥**

यदि यस्य विनाशकारणं नोपलभ्यते तदवतिष्ठते, अवस्थानाच्च तन्नित्यत्वं प्रसज्यते, [१]एवं च सति यानि खल्विमानि शब्दश्रवणानि शब्दाभिव्यक्तय इति मतम्[२], न तेषां विनाशकारणं भवतोपपाद्यते, अनुपपादनादवस्थानम्। अवस्थानात् तेषां नित्यत्वं प्रसज्यत इति। अथ नैवम्, न तर्हि विनाशकारणानुपलब्धेः शब्दस्यावस्थानान्नित्यत्वमिति ॥३७ ॥

[**वा** पृः २९३; **टी** पृः ४१६; **प** पृः ४०८]

कम्पसमानाश्रयस्य चानुनादस्य पाणिप्रश्लेषात् कम्पवत् कारणोपरमादभावः। वैयधिकरण्ये हि न प्रतिघातिद्रव्यप्रश्लेषात् समानाधिकरणस्यैवोपरमः स्यादिति—

**अस्पर्शत्वादप्रतिषेधः ॥२।२।३८ ॥**

[३]यदिदं नाकाशगुणः शब्द इति प्रतिषिध्यते, अयमनुपपन्नः प्रतिषेधः।

---

१. एवं यानि TC २. मन्यते J ३. यदिदमाका° T

[1]कस्मात्? अस्पर्शत्वाच्छब्दाश्रयस्य। रूपादिसमानदेशस्याग्रहणे सति शब्दसन्तानोपपत्तेरस्पर्शव्यापिद्रव्याश्रयः शब्द इति ज्ञायते, न[2] कम्पसमानाश्रय इति ॥३८॥

[**वा** पृः २९३; **टी** पृः ४१८; **प** पृः ४०९]

प्रतिद्रव्यं रूपादिभिः सह सन्निविष्टः शब्दस्तैः[3] समानदेशोऽभिव्यज्यत इति नोपपद्यते। [4]कथम्?

## विभक्त्यन्तरोपपत्तेश्च समासे॥२।२।३९॥

सन्तानोपपत्तेश्चेति चार्थः। तद् व्याख्यातम्। यदि रूपादयः शब्दाश्च प्रतिद्रव्यं समस्ताः समुदिताः, तस्मिन् समासे समुदाये यो यथाजातीयकः सन्निविष्टस्तस्य तथाजातीयस्यैव ग्रहणेन भवितव्यम्, [5]शब्दे रूपादिवत्। तत्र योऽयं विभाग एकद्रव्ये नानारूपा भिन्नश्रुतयो विधर्माणः शब्दा अभिव्यज्यमानाः श्रूयन्ते, यच्च विभागान्तरं सरूपाः समानश्रुतयः सधर्माणः शब्दास्तीव्रमन्दधर्मतया भिन्नाः श्रूयन्ते तदुभयं नोपपद्यते, नानाभूतानामुत्पद्यमानानामयं धर्मो नैकस्य व्यज्यमानस्येति। अस्ति चायं विभागो विभागान्तरं च। तेन [6]विभागोपपत्तेर्मन्यामहे, न प्रतिद्रव्यं रूपादिभिः सह शब्दः सन्निविष्टो व्यज्यत इति॥३९॥

॥शब्दानित्यत्वप्रकरणम्॥

---

१. कस्मात् J only  २. न न J  ३. तैः J  ४. कथम् om J
५. शब्दस्य J  ६. विभागान्तरोपपत्तेः J

# [ शब्दपरिणामप्रकरणम् ]

[**वा** पृ: २९४; **टी** पृ: ४१८; **प** पृ: ४१०]

द्विविधश्चायं शब्दो वर्णात्मको ध्वनिरूपश्च[१]। तत्र वर्णात्मनि तावत्—

## विकारादेशोपदेशात् संशयः॥२।२।४०॥

दध्यत्रेति **केचिदि**कार इत्वं हित्वा यत्वमापद्यत इति विकारं मन्यन्ते। **केचिदि**कारस्य प्रयोगे विषयकृते यदिकारः स्थानं जहाति, तत्र यकारस्य प्रयोगं ब्रुवते। संहितायां विषये इकारो न प्रयुज्यते, तस्य स्थाने यकारः प्रयुज्यते। स आदेश इति। उभयमिदमुपदिश्यते। तत्र न ज्ञायते किं तत्त्वमिति।

आदेशोपदेशस्तत्त्वम्। विकारोपदेशे ह्यन्वयस्याग्रहणाद् विकाराननुमानम्। सत्यन्वये धर्मिणः किञ्चिन्निवर्तते किञ्चिदुपजायत इति शक्येत विकारोऽनुमातुम्। न चात्रान्वयो गृह्यते। तस्माद् विकारो नास्तीति।

भिन्नकरणयोश्च वर्णयोरप्रयोगे प्रयोगोपपत्तिः। विवृतकरण इकार ईषत्स्पृष्टकरणो यकारः। ताविमौ पृथक्करणाख्येन प्रयत्नेनोच्चारणीयौ। तयोरेकस्याप्रयोगेऽन्यस्य प्रयोग उपपन्न इति।

अविकारे चाविशेषः। यत्रेमाविकारयकारौ न विकारभूतौ—यतते, यच्छति प्रायंस्त इति इकार[२] इदमिति च, यत्र च विकारभूतौ इष्ट्या दध्याहरेति। उभयत्र प्रयोक्तुरविशेषो[३] यत्नः श्रोतुश्च श्रुतिरित्यादेशोपपत्तिः।

प्रयुज्यमानाग्रहणाच्च। न खल्विकारः प्रयुज्यमानो यकारभावमापद्यमानो गृह्यते। किं तर्हि? इकारस्याप्रयोगे[४] यकारः प्रयुज्यते, तस्मादविकार इति।

---

१. ध्वनिमात्रश्च TC  २. इडा इरा for इकार J  ३. अविशिष्टो J
४. प्रयोगे for अप्रयोगे TC

अविकारे च न शब्दान्वाख्यानलोपः। न विक्रियन्ते वर्णा इति। न चैतस्मिन् पक्षे शब्दान्वाख्यानस्यासम्भवो येन वर्णविकारं प्रतिपद्येमहीति।

न च खलु वर्णस्य वर्णान्तरं कार्यम्। न हीकाराद् यकार उत्पद्यते यकाराद् वा इकारः। पृथक्स्थानप्रयत्नोत्पाद्या हीमे वर्णाः। तेषामन्योऽन्यस्य स्थाने प्रयुज्यत इति युक्तम्। एतावच्चैतत्, परिणामो वा विकारः स्यात् कार्यकारणभावो वा। उभयं च नास्ति। तस्मात् न सन्ति वर्णविकाराः।

वर्णसमुदायविकारानुपपत्तिवच्च वर्णविकारानुपपत्तिः। अस्तेर्भूः [पा. सू. २।४।५२] ब्रुवो वचि[पा. सू. २।४।५३]रिति यथा वर्णसमुदायस्य धातुलक्षणस्य क्वचिद् विषये[१] वर्णान्तरसमुदायो न परिणामो न कार्यम्, अपि तु[२] शब्दान्तरस्य स्थाने शब्दान्तरं प्रयुज्यते तथा वर्णस्य वर्णान्तरमिति॥४०॥

[**वा** पृः २९४; **टी** पृः ४२०; **प** पृः ४११]

इतश्च न सन्ति वर्णविकाराः

**प्रकृतिविवृद्धौ विकारविवृद्धेः ॥२।२।४१॥**

प्रकृत्यनुविधानं विकारेषु दृष्टम्। यकारे तु ह्रस्वदीर्घानुविधानं नास्ति येन विकारत्वमनुमीयत इति॥४१॥

[**वा** पृः २९४; **टी** पृः ४२०; **प** पृः ४११]

**न्यूनसमाधिकोपलब्धेर्विकाराणामहेतुः॥२।२।४२॥**

---

१. असार्वधातुके note in J margin २. अपि तु J only

द्रव्यविकारा न्यूनाः समा अधिकाश्च गृह्यन्ते। तद्वदयं विकारो न्यूनः स्यादिति ॥४२॥

[**वा** पृ: २९४; **टी** पृ: ४२०; **प** पृ: ४११]

**द्विविधस्यापि हेतोरभावादसाधनं दृष्टान्तः ॥२।२।४३॥**

अत्र नोदाहरणसाधर्म्याद्धेतुरस्ति न वैधर्म्यात्। अनुपसंहृतश्च हेतुना दृष्टान्तो न साधक इति। प्रतिदृष्टान्ते चानियमः प्रसज्येत। यथानडुहः स्थानेऽश्वो वोढुं नियुक्तो न तद्विकारो भवति, एवम् इवर्णस्य स्थाने यकारः प्रयुक्तो न तद्विकार इति। न चात्र नियमहेतुरस्ति, दृष्टान्तः साधको न प्रतिदृष्टान्त इति ॥४३॥

[**वा** पृ: २९५; **टी** पृ: ४२१; **प** पृ: ४१२]

द्रव्यविकारोदाहरणं च—

**नातुल्यप्रकृतीनां विकारविकल्पात् ॥२।२।४४॥**

अतुल्यानां द्रव्याणां प्रकृतिभावो विकल्पते, विकाराश्च प्रकृतीरनुविधीयन्ते। न त्विवर्णमनुविधीयते यकारः। तस्मादनुदाहरणं द्रव्यविकार इति ॥४४॥

[**वा** पृ: २९५; **टी** पृ: ४२१; **प** पृ: ४१२]

**द्रव्यविकारवैषम्यवद् वर्णविकारविकल्पः ॥२।२।४५॥**

यथा द्रव्यभावेन तुल्यायाः प्रकृतेर्विकारवैषम्यम्[१], एवं वर्णभावेन तुल्यायाः प्रकृतेर्विकारविकल्प इति ॥४५ ॥

[**वा** पृः २९५; **टी** पृः ४२२; **प** पृः ४१२]

**न, विकारधर्मानुपपत्तेः ॥२ ।२ ।४६ ॥**

अयं विकारधर्मो द्रव्यसामान्ये। यदात्मकं यद् द्रव्यं मृद् वा सुवर्णं वा, तस्यात्मनोऽन्वये पूर्वो व्यूहो निवर्तते, व्यूहान्तरं चोपजायते। तं विकारमाचक्षते[२]। न तु वर्णसामान्ये कश्चिच्छब्दात्मा अन्वयी य इत्वं जहाति यत्वं चापद्यते। तत्र यथा सति द्रव्यभावे विकारवैषम्ये नानडुहोऽश्वो विकारो विकारधर्मानुपपत्तेः, एवमिवर्णस्य न यकारो विकारो विकारधर्मानुपपत्तेरिति ॥४६ ॥

[**वा** पृः २९५; **टी** पृः ४२२; **प** पृः ४१२]

इतश्च न सन्ति वर्णविकाराः—

**विकारप्राप्तानामपुनरापत्तेः ॥२ ।२ ।४७ ॥**

अनुपपन्ना पुनरापत्तिः। कथम्? पुनरापत्तेरननुमानादिति इकारो यकारत्वमापन्नः पुनरिकारो भवतीति। न पुनरिकारस्य स्थाने यकारस्य प्रयोगोऽप्रयोगश्चेत्यत्रानुमानं नास्ति ॥४७ ॥

---

१. विकारो विषमः J २. ०माचक्ष्महे। J C var

[**वा** पृः २९५; **टी** पृः ४२२; **प** पृः ४१३]

अननुमानादिति न। इदं ह्यनुमानम्—

## सुवर्णादीनां पुनरापत्तेरहेतुः ॥२।२।४८॥

सुवर्णं कुण्डलत्वं हित्वा रुचकत्वमापद्यते, रुचकत्वं हित्वा पुनः कुण्डलत्वमापद्यते। एवमिकारोऽपि यकारत्वमापन्नः पुनरिकारो भवतीति ॥४८॥

[**वा** पृः २९६; **टी** पृः ४२२; **प** पृः ४१३]

व्यभिचारादननुमानम्। यथा पयो दधिभावमापन्नं पुनर्न पयो भवति, किमेवं वर्णानामपुनरापत्तिः? अथ सुवर्णवत् पुनरापत्तिरिति। सुवर्णोदाहरणोपपत्तिश्च—

## न, तद्विकाराणां सुवर्णभावाव्यतिरेकात् ॥२।२।४९॥

अवस्थितं सुवर्णं हीयमानेन च धर्मेणोपजायमानेन च धर्मी भवति। नैवं कश्चिच्छब्दात्मा हीयमानेनेत्वेनोपजायमानेन यत्वेन धर्मी गृह्यते। तस्मात् सुवर्णोदाहरणं नोपपद्यत इति।

वर्णत्वाव्यतिरेकाद् वर्णविकाराणामप्रतिषेधः। वर्णविकारा अपि वर्णत्वं न व्यभिचरन्ति[1], यथा सुवर्णविकारः सुवर्णत्वमिति।

सामान्यवतो धर्मयोगो न सामान्यस्य। कुण्डलरुचकौ सुवर्णस्य धर्मौ न सुवर्णत्वस्य। एवमिकारयकारौ कस्य वर्णात्मनो धर्मौ? वर्णत्वं हि सामान्यं न तस्येमौ धर्मौ भवितुमर्हतः। न च निवर्तमानो धर्म उपजायमानस्य प्रकृतिः। तत्र निवर्तमान इकारो न यकारस्योपजायमानस्य प्रकृतिरिति ॥४९॥

१. व्यतिरिच्यन्ते J

[**वा** पृः २९६; **टी** पृः ४२३; **प** पृः ४१३]

इतश्च वर्णविकारानुपपत्तिः—

**नित्यत्वेऽविकारादनित्यत्वे चानवस्थानात्॥२।२।५०॥**

नित्या वर्णा इत्येतस्मिन् पक्षे इकारयकारौ वर्णौ इत्युभयोर्नित्यत्वाद् विकारानुपपत्तिः। नित्यत्वे ह्यविनाशित्वात् कः कस्य विकार इति। अथानित्या वर्णा इति पक्षः, एवमप्यनवस्थानं वर्णानाम्। किमिदमनवस्थानं वर्णानाम्[1]? उत्पद्य निरोधः। उत्पद्य निरुद्धे इकारे यकार उत्पद्यते, यकारे चोत्पद्य निरुद्ध इकार उत्पद्यत इति कः कस्य विकारः? तदेतदवगृह्य सन्धाने सन्धाय चावग्रहे वेदितव्यमिति॥५०॥

[**वा** पृः २९६; **टी** पृः ४२३; **प** पृः ४१३]

नित्यपक्षे तु तावत्समाधिः—

**नित्यानामतीन्द्रियत्वात् तद्धर्मविकल्पाच्च वर्णविकाराणामप्रतिषेधः॥२।२।५१॥**

नित्या वर्णा न विक्रियन्त इति विप्रतिषेधः। यथा हि नित्यत्वे सति किञ्चिदतीन्द्रियम्, किञ्चिदिन्द्रियग्राह्यम्[2]। इन्द्रियग्राह्याश्च वर्णाः। एवं नित्यत्वे सति किञ्चिन्न विक्रियते, वर्णास्तु विक्रियन्त इति। विरोधादहेतुस्तद्धर्मविकल्पः। नित्यं नोपजायते नापैति अनुपजनापायधर्मकं नित्यम्, अनित्यं पुनरुपजनापाययुक्तम् न चान्तरेणोपजनापायौ विकारः सम्भवति। तद् यदि वर्णा विक्रियन्ते, नित्यत्वमेषां

---

१. वर्णानाम् Om J  २. किञ्चिदि...म् Om JT

निवर्तते। अथ नित्या वर्णाः, विकारधर्मत्वमेषां निवर्तते। सोऽयं विरुद्धो हेत्वाभासो धर्मविकल्प इति ॥५१॥

[**वा** पृः २९६; **टी** पृः ४२४; **प** पृः ४१४]

अनित्यपक्षे समाधिः—

**अनवस्थायित्वे च वर्णोपलब्धिवत् तद्विकारोपपत्तिः ॥२।२।५२॥**

यथानवस्थायिनां वर्णानां श्रवणं भवत्येवमेषां विकारोऽपि भवतीति।

असम्बन्धादसमर्था नार्थप्रतिपादिका, न च वर्णोपलब्धिर्वर्णविकारेण सम्बन्धादसमर्था, या गृह्यमाणा वर्णविकारमर्थमनुमापयेदिति। तत्र यादृगिदं यथा गन्धगुणा पृथिव्येवं च शब्दसुखादिगुणापीति, तादृगेतद् भवतीति। न च वर्णोपलब्धिर्वर्णनिवृत्तौ वर्णान्तरप्रयोगस्य निर्वर्त्तिका। योऽयमिवर्णनिवृत्तौ यकारस्य प्रयोगो यद्ययं वर्णोपलब्ध्या निवर्तेत, तदा तत्र उपलभ्यमान इवर्णो यत्वमापद्यत इति गृह्येत। तस्माद् वर्णोपलब्धिरहेतुर्वर्णविकारस्येति ॥५२॥

[**वा** पृः २९७; **टी** पृः ४२४; **प** पृः ४१४]

**विकारधर्मित्वे नित्यत्वाभावात् कालान्तरे विकारोपपत्तेश्चाप्रतिषेधः ॥२।२।५३॥**

तद्धर्मविकल्पादिति न युक्तः प्रतिषेधः। न खलु विकारधर्मकं किञ्चिन्नित्यमुपलभ्यत इति वर्णोपलब्धिवदिति न युक्तः प्रतिषेधः। अवग्रहे हि दधि अत्रेति

प्रयुज्य चिरं स्थित्वा ततः संहितायां प्रयुङ्क्ते दध्यत्रेति। चिरनिवृत्ते चायमिवर्णे यकारः प्रयुज्यमानः कस्य विकार इति प्रतीयते,

**कारणाभावात् कार्याभावः [ वै. सू. १।२।१ ]**

इत्यनुयोगः[१] प्रसज्यत इति॥५३॥

[**वा** पृः २९७; **टी** पृः ४२४; **प** पृः ४१४]

इतश्च वर्णविकारानुपपत्तिः—

**प्रकृत्यनियमात्॥२।२।५४॥**

वर्णविकाराणाम्। इकारस्थाने च यकारः श्रूयते, यकारस्थाने खल्विकारो विधीयते विध्यतीति। तद् यदि स्यात् प्रकृतिविकारभावो वर्णानाम्, तस्य प्रकृतिनियमः स्यात्। दृष्टो विकारधर्मित्वे प्रकृतिनियम इति॥५४॥

[**वा** पृः २९७; **टी** पृः ४२५; **प** पृः ४१४]

**अनियमे नियमान्नानियमः॥२।२।५५॥**

योऽयं प्रकृतेरनियम उक्तः स नियतो यथाविषयं व्यवस्थितो नियतत्वान्नियम एव भवति। एवं च सत्यनियमो नास्ति। तत्र यदुक्तं प्रकृत्यनियमादिति, एतदयुक्तमिति॥५५॥

---

१. अप्रयोगः for अनुयोगः J

[**वा** पृः २९७; **टी** पृः ४२५; **प** पृः ४१५]

**नियमानियमविरोधादनियमे नियमाच्चाप्रतिषेधः ॥२।२।५६॥**

नियम इत्यत्रार्थाभ्यनुज्ञा, अनियम इति तस्य प्रतिषेधः। अनुज्ञातप्रतिषिध्ययोश्च व्याघातादनर्थान्तरत्वं न भवति। अनियमश्च नियतत्वान्नियमो न भवतीति नात्रार्थस्य तथाभावः प्रतिषिध्यते। किं तर्हि? तथाभूतस्यार्थस्य नियमशब्देनाभिधीयमानस्य नियतत्वान्नियमशब्द एवोपपद्यते। सोऽयं नियमादनियमे प्रतिषेधो न भवतीति ॥५६॥

[**वा** पृः २९८; **टी** पृः ४२५; **प** पृः ४१५]

न चेयं वर्णविकारोपपत्तिः परिणामात् कार्यकारणभावाद् वा। किं तर्हि?

**गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु विकारोपपत्तेर्वर्णविकाराः ॥२।२।५७॥**

स्थान्यादेशभावादप्रयोगे प्रयोगो विकारशब्दार्थः, स भिद्यते। गुणान्तरापत्तिः, उदात्तस्यानुदात्तः इत्येवमादिः। उपमर्दो नाम एकरूपनिवृत्तौ रूपान्तरोपजनः। ह्रासो दीर्घस्य ह्रस्वः। वृद्धिर्ह्रस्वस्य दीर्घः, तयोर्वा प्लुतः। लेशो लाघवम्, स्त इत्यस्तेर्विकारः। श्लेषः आगमः प्रकृतेः प्रत्ययस्य वा। एते एव विशेषा विकारा इति। एत एवादेशाः, एते चेद् विशेषविकारा[१] उपपद्यन्ते, तर्हि वर्णविकारा इति ॥५७॥

॥शब्दपरिणामप्रकरणम्॥

---

१. विशेष added J

## [ पदार्थनिरूपणप्रकरणम् ]

[**वा** पृः २९८; **टी** पृः ४२६; **प** पृः ४१५]

### ते विभक्त्यन्ताः पदम्॥२।२।५८॥

यथादर्शनं विकृता वर्णा विभक्त्यन्ताः पदसंज्ञा भवन्ति। विभक्तिर्द्वयी— नामिक्याख्यातिकी च। ब्राह्मणः पचतीत्युदाहरणम्। उपसर्गनिपातास्तर्हि न पदसंज्ञा? लक्षणान्तरं वा वाच्यमिति। न, शिष्यते च खलु नामिक्या विभक्तेः

**अव्ययादाप्सुपः[१] [ पा. सू. २।४।८२ ]**

लोप इति तयोः पदसंज्ञार्थमिति॥५८॥

[**वा** पृः २९९; **टी** पृः ४३१; **प** पृः ४१८]

पदेनार्थसम्प्रत्यय इति प्रयोजनम्। नामपदं चाधिकृत्य परीक्षा। गौरिति पदं खल्विदमुदाहरणम्। तदर्थे—

### व्यक्त्याकृतिजातिसन्निधावुपचारात् संशयः॥२।२।५९॥

अविनाभाववृत्तिः सन्निधिः। अविनाभावेन वर्तमानासु व्यक्त्याकृतिजातिषु गौरिति प्रयुज्यते। तत्र न ज्ञायते किमन्यतमः पदार्थः उत सर्वमिति॥५९॥

---

१. आप्सुपः added J

[**वा** पृः ३००; **टी** पृः ४३२; **प** पृः ४१८]

शब्दस्य प्रयोगसामर्थ्यात् पदार्थावधारणम्। तस्मात्—

**याशब्दसमूहत्यागपरिग्रहसंख्यावृद्ध्यपचयवर्णसमासानुबन्धानां व्यक्तावुपचाराद् व्यक्तिः॥२।२।६०॥**

व्यक्तिः पदार्थः। कस्मात्? याशब्दप्रभृतीनां व्यक्तावुपचारात्। उपचारः प्रयोगः। या गौस्तिष्ठति या गौर्निषण्णेति, नेदं वाक्यं जातेरभिधायकमभेदात्, भेदात्तु द्रव्यस्याभिधायकम्। गवां समूह इति भेदाद् द्रव्याभिधानं न जातेरभेदात्। वैद्याय गां ददातीति द्रव्यस्य त्यागो न जातेरमूर्तस्य त्यागानुपपत्तेः[१] प्रतिक्रमानुक्रमानुपपत्तेश्च। परिग्रहः स्वत्वेनाभिसम्बन्धः। कौण्डिन्यस्य गौर्वाभ्रव्यस्य गौरिति। द्रव्याभिधाने द्रव्यभेदात् सम्बन्धभेद इत्युपपन्नम्, अभिन्ना तु जातिरिति। संख्या, दश गावो विंशतिर्गाव इति भिन्नं द्रव्यं संख्यायते, न जातिरभेदादिति। वृद्धिः कारणवतो द्रव्यस्यावयवोपचयः अवर्धत गौरिति, निरवयवा तु जातिरिति। एतेनापचयो व्याख्यातः। वर्णः शुक्ला गौः कपिला गौरिति, द्रव्यस्य गुणयोगो न सामान्यस्य। समासः, गोहितं गोसुखमिति द्रव्यस्य हितसुखादियोगो न जातेरिति। अनुबन्धः, सरूपप्रजननसन्तानो गौर्गां जनयतीति, तदुत्पत्तिधर्मकत्वाद् द्रव्ये युक्तं न जातौ विपर्ययादिति। द्रव्यं व्यक्तिरिति हि नार्थान्तरम्॥६०॥

[**वा** पृः ३००; **टी** पृः ४३२; **प** पृः ४१८]

अस्य प्रतिषेधः—

---

१. अमूर्त्तत्वात् for अमूर्त...त्तेः C

**न, तदनवस्थानात्॥२।२।६१॥**

न व्यक्तिः पदार्थः। कस्मात्? तस्या अनवस्थानात्। याशब्दप्रभृतिभिर्यो विशेष्यते स गोशब्दस्यार्थो या गौस्तिष्ठति, या गौर्निषण्णेति, नात्र द्रव्यमात्रमविशिष्टं जात्या विनाभिधीयते। किं तर्हि? जातिविशिष्टम्। तस्मान्न व्यक्तिः पदार्थः। एवं समूहादिषु द्रष्टव्यम्॥६१॥

[**वा** पृः ३०१; **टी** पृः ४३२; **प** पृः ४१८]

यदि न व्यक्तिः पदार्थः कथं तर्हि व्यक्तावुपचारः? निमित्ताद् अतद्भावेऽपि तदुपचारः। दृश्यते हि खलु—

**सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वतद्भावेऽपि तदुपचारः॥२।२।६२॥**

अतद्भावेऽपि तदुपचार इति अतच्छब्दस्य तेन शब्देनाभिधानमिति, सहचरणात्, यष्टिकां भोजयेति यष्टिकासहचरितो ब्राह्मणोऽभिधीयत इति। स्थानात्, मञ्चाः क्रोशन्तीति मञ्चस्थाः पुरुषा अभिधीयन्ते। तादर्थ्यात्, कटार्थेषु वीरणेषु व्यूह्यमानेषु कटं करोतीति भवति। वृत्तात् यमो राजा कुवेरो राजेति तद्वद्वर्तत इति। मानात्, आढकेन मिताः सक्तव आढकसक्तव इति। धारणात्, तुलायां धृतं चन्दनं तुलाचन्दनमिति। सामीप्यात्, गङ्गायां गावश्चरन्तीति देशोऽभिधीयते सन्निकृष्टः[१]। योगात्, कृष्णेन रागेण युक्तः शाटकः कृष्ण इत्यभिधीयते। साधनात्,

१. सन्निकृष्टः Om J

अन्नं प्राणा इति। आधिपत्यात्, अयं पुरुषः कुलम्, अयं गोत्रमिति। तत्रायं सहचरणाद् योगाद् वा जातिशब्दो व्यक्तौ प्रयुज्यत इति॥६२॥

[**वा** पृः ३०१; **टी** पृः ४३३; **प** पृः ४१९]

यदि खलु[1] गौरिति पदस्य न व्यक्तिरर्थः, अस्तु तर्हि—

**आकृतिस्तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः॥२।२।६३॥**

आकृतिः पदार्थः। कस्मात्? तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः। सत्त्वावयवानां तदवयवानां च नियतो व्यूह आकृतिः। तस्यां गृह्यमाणायां सत्त्वव्यवस्थानं सिध्यति, अयं गौरयमश्व इति नागृह्यमाणायाम्। यस्य ग्रहणात् सत्त्वव्यवस्थानं सिध्यति तं शब्दोऽभिधातुमर्हति, सोऽस्यार्थ इति॥६३॥

[**वा** पृः ३०२; **टी** पृः ४३४; **प** पृः ४१९]

नैतदुपपद्यते[2], यस्य जात्या योगस्तदत्र जातिविशिष्टमभिधीयते गौरिति। न चावयवव्यूहस्य[3] जात्या योगः। कस्य तर्हि? नियतावयवव्यूहस्य द्रव्यस्य। तस्मान्नाकृतिः पदार्थः। अस्तु तर्हि जातिः पदार्थः—

**व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात् प्रोक्षणादीनां मृद्गवके जातिः॥२।२।६४॥**

जातिः पदार्थः। कस्मात्? व्यक्त्याकृतियुक्तेऽपि मृद्गवके प्रोक्षणादीनाम-

---

१. खलु J　　२. तदुपपद्यते C　　३. द्रव्यस्य added J

प्रसङ्गादिति[१]। गां प्रोक्षय, गामानय, गां देहीति नैतानि मृद्गवके प्रयुज्यन्ते, कस्मात्? जातेरभावात्। अस्ति हि तत्र व्यक्तिः, अस्त्याकृतिः। यदभावात् तत्रासंप्रत्ययः स पदार्थ इति॥६४॥

[**वा** पृः ३०६; **टी** पृः ४३४; **प** पृः ४१९]

**नाकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः॥२।२।६५॥**

जातेरभिव्यक्तिराकृतिव्यक्ती अपेक्षते। नागृह्यमाणायामाकृतौ व्यक्तौ च जातिमात्रं शुद्धं गृह्यते। तस्मान्न जातिः पदार्थ इति॥६५॥

[**वा** पृः ३०६; **टी** पृः ४३४; **प** पृः ४२०]

न वै पदार्थेन न भवितुं शक्यम्। कः स्वल्विदानीं पदार्थ इति—

**व्यक्त्याकृतिजातयस्तु पदार्थः॥२।२।६६॥**

तु शब्दो विशेषणार्थः। किं विशिष्यते? प्रधानाङ्गभावस्यानियमेन पदार्थत्वमिति। यदा हि भेदविवक्षा विशेषगतिश्च तदा व्यक्तिः प्रधानम्, अङ्गं तु जात्याकृती। यदा तु भेदोऽविवक्षितः, सामान्यगतिश्च, तदा जातिः प्रधानम्, अङ्गं तु व्यक्त्याकृती। तदेतद् बहुलं प्रयोगेषु। आकृतेस्तु प्रधानभाव उत्प्रेक्षितव्यः॥६६॥

---

१. अभावादिति for अप्रसङ्गादिति J

[**वा** पृः ३१६; **टी** पृः ४४८; **प** पृः ४२२]

कथं पुनर्ज्ञायते नाना व्यक्त्याकृतिजातय इति, लक्षणभेदात्। तत्र तावत्—

**व्यक्तिर्गुणविशेषाश्रयो मूर्तिः॥२।२।६७॥**

व्यज्यत इति व्यक्तिरिन्द्रियग्राह्येति न सर्वं द्रव्यं व्यक्तिः। यो गुणविशेषाणां स्पर्शान्तानां गुरुत्वघनत्वद्रवत्वसंस्काराणामव्यापिनश्च परिमाणस्याश्रयो यथासम्भवं तद् द्रव्यं मूर्तिः, मूर्च्छितावयवत्वादिति॥६७॥

[**वा** पृः ३१७; **टी** पृः ४५०; **प** पृः ४२२]

**आकृतिर्जातिलिङ्गाख्या॥२।२।६८॥**

यथा जातिर्जातिलिङ्गानि च प्रख्यायन्ते, तामाकृतिं विद्यात्। सा च नान्या सत्त्वावयवानां तदवयवानां च नियताद् व्यूहादिति। नियतावयवव्यूहाः खलु सत्त्वावयवा जातिलिङ्गम्, शिरसा पादेन हि गामनुमिन्वन्ति। नियते च सत्त्वावयवानां व्यूहे सति गोत्वं प्रख्यायत इति। अनाकृतिव्यङ्ग्यायां जातौ मृत्सुवर्णं रजतमित्येवमादिष्वाकृतिर्निवर्तते, जहाति पदार्थत्वमिति॥६८॥

[**वा** पृः ३१८; **टी** पृः ४५०; **प** पृः ४२२]

**समानप्रसवात्मिका जातिः॥२।२।६९॥**

या समानां बुद्धिं प्रसूते भिन्नेष्वधिकरणेषु, यया च बहूनीतरेतरतो न

व्यावर्तन्ते, योऽर्थोऽनेकत्र प्रत्ययानुवृत्तिनिमित्तम्, तत् सामान्यम्, यच्च केषाञ्चिदभेदं करोति, कुतश्चिद् भेदम्, तत् सामान्यविशेषो जातिरिति॥६९॥

॥पदार्थनिरूपणप्रकरणम्॥

॥अवसितं सभाष्ये र्शने द्वितीयाध्यायस्य द्वितीयाह्निकम्॥

द्वितीयोऽध्यायः॥

# तृतीयाध्यायस्य प्रथमाह्निकम्

## [ इन्द्रियभेदप्रकरणम् ]

[वा पृ: ३१९; टी पृ: ४५२; प पृ: ४२३]

परीक्षितानि प्रमाणानि। प्रमेयमिदानीं परीक्ष्यते। तच्चात्मादि इत्यात्मा विविच्यते, किं देहेन्द्रियमनोबुद्धिवेदनासङ्घातमात्रमात्मा[१], आहोस्वित् ततो व्यतिरिक्त इति। कुतः संशयः? व्यपदेशस्योभयथा सिद्धेः संशयः[२]। क्रियाकरणयोः कर्त्रा सम्बन्धस्याभिधानं व्यपदेशः। स द्विविधः। अवयवेन समुदायस्य, मूलैर्वृक्षस्तिष्ठति, स्तम्भैः प्रासादो ध्रियत इति। अन्येन चान्यस्य व्यपदेशः, परशुना वृश्चति, प्रदीपेन पश्यतीति। अस्ति चायं व्यपदेशः, चक्षुषा पश्यति, मनसा विजानाति, बुद्ध्या विचारयति, शरीरेण सुखदुःखमनुभवतीति। तत्र नावधार्यते, किमवयवेन समुदायस्य देहादिसंघातस्य व्यपदेशः[३]? अथान्येनान्यस्य तद्व्यतिरिक्तस्य वेति।

अन्येनान्यस्य व्यपदेशः। कस्मात्?

**दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्॥३।१।१॥**

दर्शनेन कश्चिदर्थो गृहीतः, स्पर्शनेनापि सोऽर्थो गृह्यते, यमहमद्राक्षं चक्षुषा तं स्पर्शनेनापि स्पृशामीति, यं चास्पार्क्षं स्पर्शनेन, तं चक्षुषा पश्यामीति। एकविषयौ द्वाविमौ प्रत्ययावेककर्तृकौ प्रतिसन्धीयेते। न च सङ्घातकर्तृकौ नेन्द्रियेणैककर्तृकौ। तद् योऽसौ चक्षुषा त्वगिन्द्रियेण चैकार्थस्य ग्रहीता भिन्ननिमित्तावनन्यकर्तृकौ प्रत्ययौ समानविषयौ प्रतिसन्दधाति सोऽर्थान्तरभूत आत्मा इति। कथं पुनर्नेन्द्रियेणैककर्तृकौ? इन्द्रियं खलु स्वं स्वं विषयग्रहणमनन्यकर्तृकं प्रतिसन्धातु-

---

१. वेदना Om J २. संशयः J ३. व्यपदेशः J

मर्हति नेन्द्रियान्तरस्य विषयान्तरग्रहणमिति[१]। कथं न सङ्घातकर्तृकौ? एकः खल्वयं भिन्ननिमित्तौ स्वात्मकर्तृकौ प्रत्ययौ प्रतिसंहितौ वेदयते न सङ्घातः। कस्मात्? अनिवृत्तं हि सङ्घाते प्रत्येकं विषयान्तरग्रहणस्याप्रतिसन्धानमिन्द्रियान्तरेणेवेति ॥१ ॥

[**वा** पृः ३२९; **टी** पृः ४६०; **प** पृः ४३०]

**न, विषयव्यवस्थानात् ॥३ ।१ ।२ ॥**

न देहादिसङ्घातादन्यश्चेतनः। कस्मात्? विषयव्यवस्थानात्। व्यवस्थितविषयाणीन्द्रियाणि। चक्षुष्यसति रूपं न गृह्यते, सति च गृह्यते। यच्च यस्मिन्नसति न भवति, सति भवति, तस्य तदिति विज्ञायते। तस्माद् रूपग्रहणं चक्षुषः, चक्षू रूपं पश्यतीति। एवं घ्राणादिष्वपीति। तानीन्द्रियाणीमानि स्वस्वविषयग्रहणाच्चेतनानि इन्द्रियाणां भावाभावयोर्विषयग्रहणस्य तथाभावादिति। एवं च सति किमन्येन चेतनेनेति।

सन्दिग्धत्वादहेतुः। योऽयमिन्द्रियाणां भावाभावयोर्विषयग्रहणस्य तथाभावः, किमयं चेतनत्वादाहोस्विच्चेतनोपकरणानां ग्रहणनिमित्तत्वादिति सन्दिह्यते। चेतनोपकरणत्वेऽपीन्द्रियाणां ग्रहणनिमित्तत्वाद् एतद् भवितुमर्हति[२] ॥२ ॥

[**वा** पृः ३२९; **टी** पृः ४६०; **प** पृः ४३१]

यच्चोक्तं विषयव्यवस्थानादिति

**तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेधः ॥३ ।१ ।३ ॥**

---

१. अन्तर Om J २. एतद् Om C; भवति for भवितुमर्हति J

यदि खल्वेकमिन्द्रियमव्यवस्थितविषयं सर्वज्ञं सर्वविषयग्राहि चेतनं स्यात् कस्ततोऽन्यं चेतनमनुमातुं शक्नुयात्? यस्मात् व्यवस्थितविषयाणीन्द्रियाणि, तस्मात् तेभ्योऽन्यश्चेतनः सर्वज्ञः सर्वविषयग्राही विषयव्यवस्थितिमतीतोऽनुमीयते। तत्रेदमभिज्ञानमप्रत्याख्येयं चेतनवृत्तमुदाह्रियते। रूपदर्शी खल्वयं रसं गन्धं वा पूर्वगृहीतसाहचर्यमनुमिनोति[१]। गन्धप्रतिसंवेदी च रूपरसावनुमिनोति। एवं विषयशेषेऽपि वाच्यम्। रूपं दृष्ट्वा गन्धं जिघ्रति, घ्रात्वा च गन्धं रूपं पश्यति। तदेवमनियतपर्यायं सर्वविषयग्रहणमेकचेतनाधिकरणमनन्यकर्तृकं प्रतिसन्धत्ते। प्रत्यक्षानुमानागमसंशयप्रतिभाप्रत्ययांश्च नानाविषयान् स्वात्मकर्तृकान् प्रतिसन्धाय वेदयते। सर्वार्थविषयं च शास्त्रं श्रुत्वा प्रतिपद्यतेऽर्थमविषयभूतं श्रोत्रस्य। क्रमभाविनो हि वर्णान् श्रुत्वा पदवाक्यभावेन प्रतिसन्धाय शब्दार्थव्यवस्थां च बुध्यमानोऽनेकविषयमर्थजातमग्रहणीयमेकैकेनेन्द्रियेण गृह्णाति। सेयं सर्वज्ञस्य[२] ज्ञेयाव्यवस्थानुपदं न शक्या परिक्रमितुम्। आकृतिमात्रं तूदाहृतम्। तत्र यदुक्तमिन्द्रियचैतन्ये सति किमन्येन चेतनेन इति तदयुक्तम् इति ॥३॥

॥इन्द्रियभेदप्रकरणम्॥

## [ शरीरव्यतिरेक्यात्मप्रकरणम् ]

[**वा** पृः ३३०; **टी** पृः ४६१; **प** पृः ४३१]

इतश्च देहादिव्यतिरिक्त आत्मा, न देहादिसंघातमात्रम्—

### शरीरदाहे पातकाभावात् ॥३।१।४॥

शरीरग्रहणेन शरीरेन्द्रियबुद्धिवेदनासंघातः प्राणिभूतो गृह्यते। प्राणिभूतं शरीरं

१. साहचर्य J २. चेतनस्य added J

दहतः प्राणिहिंसाकृतं पापं पातकमित्युच्यते। तस्याभावः, तत्फलेन कर्तुरसम्बन्धात् अकर्तुश्च सम्बन्धात्। शरीरेन्द्रियबुद्धिवेदनाप्रबन्धे खल्वन्यः सङ्घात उत्पद्यतेऽन्यो निरुध्यते। उत्पादनिरोधसन्ततिभूतश्च प्रबन्धो नान्यत्वं बाधते देहादिसङ्घातस्यान्यत्वाधिष्ठानत्वात्। अन्यत्वाधिष्ठानो ह्यसौ प्रख्यायत इति। एवं च सति यो देहादिसङ्घातः प्राणिभूतो हिंसां करोति नासौ हिंसाफलेन सम्बध्यते, यस्तु सम्बध्यते न तेन हिंसा कृता। तदेवं सत्त्वभेदे कृतहानमकृताभ्यागमश्च प्रसज्यते। सति च सत्त्वोत्पादे सत्त्वनिरोधे चाकर्मनिमित्तः सत्त्वसर्गः प्राप्नोति। तत्र मुक्त्यर्थो ब्रह्मचर्यवासो नोपपद्यते[१]। तद् यदि देहादिसङ्घातमात्रं सत्त्वं स्यात् शरीरदाहे पातकं न भवेद् दग्धुः[२]। अनिष्टं चैतत्। तस्माद् देहादिसङ्घातव्यतिरिक्त आत्मा नित्य इति ॥४॥

[**वा** पृः ३३४; **टी** पृः ४६३; **प** पृः ४३२]

**तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात् ॥३।१।५॥**

यस्यापि नित्येनात्मना सात्मकं शरीरं दह्यते, तस्यापि शरीरदाहे पातकं न भवेद्दग्धुः। कस्मात्? नित्यत्वादात्मनः। न जातु कश्चिन्नित्यं हिंसितुमर्हति। अथ हिंस्यते, नित्यत्वमस्य न भवति। सेयमेकस्मिन् पक्षे हिंसा निष्फला, अन्यस्मिंस्त्वनुपपन्नेति[३] ॥५॥

[**वा** पृः ३३६; **टी** पृः ४६४; **प** पृः ४३२]

**न, कार्याश्रयकर्तृवधात् ॥३।१।६॥**

---

१. न स्यात् TC    २. दग्धुः J    ३. अन्यस्मिंश्च पक्षेऽनुपपन्नैवेति J

न ब्रुमो नित्यस्य सत्त्वस्य वधो हिंसा इति[१]। किं तर्हि[२]? अनुच्छित्तिधर्मकस्य सत्त्वस्य कार्याश्रयस्य च शरीरस्य स्वविषयोपलब्धेश्च कर्तॄणामिन्द्रियाणामुपघातः पीडा वैकल्यलक्षणः प्रबन्धोच्छेदो वा प्रमाणलक्षणो वा वधो हिंसेति। कार्यं तु सुखदुःखसंवेदनं तस्यायतनमधिष्ठानमाश्रयः शरीरम्। कार्याश्रयस्य शरीरस्य स्वविषयोपलब्धेश्च कर्तॄणामिन्द्रियाणां वधो हिंसा, न नित्यस्यात्मनः।

तत्र यदुक्तम्, **तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात्** इत्येतदयुक्तम्। यस्य तु सत्त्वोच्छेदो हिंसा तस्य कृतहानमकृताभ्यागमश्चेति दोषः। एतावच्चैतत् स्यात् सत्त्वोच्छेदो वा हिंसा, अनुच्छित्तिधर्मकस्य सत्त्वस्य कार्याश्रयकर्तृवधो वा हिंसा। न कल्पान्तरमस्ति। सत्त्वोच्छेदश्च प्रतिषिद्धः। तत्र किमन्यत्? शेषं यथाभूतमिति।

अथवा कार्याश्रयकर्तृवधादिति, कार्याश्रयो[३] देहेन्द्रियबुद्धिसङ्घातः। नित्यस्यात्मनो यत् सुखदुःखप्रतिसंवेदनम्, तस्याधिष्ठानमाश्रयः[४] तदायतनं तद् भवति न ततोऽन्यदिति स एव कर्ता, तन्निमित्ता सुखदुःखप्रतिसंवेदनस्य निर्वृत्तिः न तदन्तरेणेति। तस्य वध उपघातः पीडा प्रमापणं वा हिंसा, न नित्यत्वेन आत्मोच्छेदः। तत्र यदुक्तम्,

**तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात् [ ३।१।५ ]**

इति, एतन्नेति ॥६॥

॥शरीरव्यतिरेक्यात्मप्रकरणम्॥

---

१. इति J　　२. अपि तु for किं तर्हि TC　　३. कार्याश्रयो Om J
४. अधिष्ठानम् Om J

## [ चक्षुरद्वैतप्रकरणम् ]

[**वा** पृः ३३७; **टी** पृः ४६५; **प** पृः ४३३]

इतश्च देहादिव्यतिरिक्त आत्मा—

**सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात्॥३।१।७॥**

पूर्वापरयोर्विज्ञानयोरेकविषये प्रतिसन्धिज्ञानं प्रत्यभिज्ञानम्। यमहमद्राक्षं[1] तमेवैतर्हि पश्यामि यमज्ञासिषं स एवायमर्थ इति। सव्येन[2] चक्षुषा दृष्टस्येतरेणापि चक्षुषा[3] प्रत्यभिज्ञानात् यमद्राक्षं तमेवैतर्हि पश्यामीति। इन्द्रियचैतन्ये तु नान्यदृष्टमन्यः प्रत्यभिजानातीति प्रत्यभिज्ञानानुपपत्तिः। अस्ति त्विदं प्रत्यभिज्ञानम्, तस्मादिन्द्रिय-व्यतिरिक्तश्चेतन इति॥७॥

[**वा** पृः ३३९; **टी** पृः ४६६; **प** पृः ४३४]

**नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात्॥३।१।८॥**

एकमिदं चक्षुर्मध्ये नासास्थिव्यवहितम्। तस्यान्तौ गृह्यमाणौ द्वित्वाभिमानं प्रयोजयतो यथा मध्यव्यवहितस्य दीर्घद्रव्यस्येति॥८॥

[**वा** पृः ३३९; **टी** पृः ४६६; **प** पृः ४३४]

**एकविनाशे द्वितीयाविनाशान्नैकत्वम् ॥३।१।९॥**

१. यम..क्षं J only २. खलु added J ३. दृष्ट्वा added J

एकस्मिन्नुपहते चोद्धृते वा चक्षुषि द्वितीयमवतिष्ठते चक्षुर्विषयग्रहणलिङ्गम्। तस्मादेकस्य व्यवधानानुपपत्तिः॥९॥

[**वा** पृः ३३९; **टी** पृः ४६६; **प** पृः ४३४]

**अवयवविनाशेऽप्यवयव्युपलब्धेरहेतुः ॥३।१।१०॥**

एकविनाशे द्वितीयावस्थानादित्यहेतुः[१]। कस्मात्? वृक्षस्य हि कासुचिच्छाखासु [२]भग्नासूपलभ्यत एव वृक्ष इति॥१०॥

[**वा** पृः ३४०; **टी** पृः ४६६; **प** पृः ४३४]

**दृष्टान्तविरोधादप्रतिषेधः॥३।१।११॥**

न कारणद्रव्यस्य विभागे कार्यद्रव्यमवतिष्ठते नित्यत्वप्रसङ्गात् बहुषु चावयविषु यस्य कारणानि विभक्तानि, तस्य विनाशः, येषां कारणान्यविभक्तानि तान्यवतिष्ठन्ते।

अथवा दृश्यमानार्थविरोधो दृष्टान्तविरोधः। मृतस्य हि शिरःकपाले द्वाववटौ नासास्थिव्यवहितौ चक्षुषः स्थानं भेदेन गृह्येते। न चैतदेकस्मिन् नासास्थिव्यवहिते सम्भवतीति।

अथवा एकविनाशस्यानियमाद् द्वाविमावर्थौ। तौ च पृथगावरणोपघाताव-नुमीयेते विभिन्नाविति[३]। अवपीडनाच्चैकस्य चक्षुषो रश्मिविषयसन्निकर्षस्य भेदाद् दृश्यभेद इव गृह्यते। तच्चैकत्वे विरुध्यते[४]। अवपीडननिवृत्तौ चाभिन्नप्रतिसन्धान-मिति। तस्मादेकस्य व्यवधानानुपपत्तिः ॥११॥

---

१. द्वितीयाविनाशात् for द्वितीया...नात् TC २. छिन्नासु for भग्नासु TC ३. अनु..विति Om J ४. तच्चै..ध्यते। Om J

[**वा** पृः ३४०; **टी** पृः ४६७; **प** पृः ४३४]

अनुमीयते चायं देहादिसङ्घातव्यतिरिक्तश्चेतन इति—

**इन्द्रियान्तरविकारात् ॥३।१।१२॥**

कस्यचिदम्लस्य फलस्य[१] गृहीततद्रससाहचर्ये रूपे गन्धे वा केनचिदिन्द्रियेण गृह्यमाणे रसनस्येन्द्रियान्तरस्य विकारः रसानुस्मृतौ रसगर्धिप्रवर्त्तितो दन्तोदक-संप्लवभूतो गृह्यते। तस्येन्द्रियचैतन्येऽनुपपत्तिः, नान्यदृष्टमन्यः स्मरतीति॥१२॥

[**वा** पृः ३४१; **टी** पृः ४६८; **प** पृः ४३५]

**न स्मृतेः स्मर्तव्यविषयत्वात् ॥३।१।१३॥**

स्मृतिर्नाम धर्मो निमित्तादुत्पद्यते। तस्याः स्मर्तव्यो विषयः। तत्कृत इन्द्रियान्तरविकारो नात्मकृत इति॥१३॥

[**वा** पृः ३४१; **टी** पृः ४६८; **प** पृः ४३५]

**तदात्मगुणसद्भावादप्रतिषेधः ॥३।१।१४॥**

तस्याः स्मृतेरात्मगुणत्वे सति सद्भावादप्रतिषेध आत्मनः। यदि स्मृतिरात्मगुणः स्यादेवं सति स्मृतिरुपपद्यते नान्यदृष्टमन्यः स्मरतीति। इन्द्रियचैतन्ये तु नानाकर्तृकाणां विषयग्रहणानामप्रतिसन्धानम्। प्रतिसन्धाने वा विषयव्यवस्थानुपपत्तिः। एकस्तु

---

१. रसेन added J

चेतनोऽनेकार्थदर्शी भिन्ननिमित्तः पूर्वदृष्टमर्थं स्मरतीति एकस्यानेकार्थदर्शिनो दर्शनप्रतिसन्धानात्। स्मृतेरात्मगुणत्वे सति सद्भावः विपर्यये च सद्भावानुपपत्तिः। स्मृत्याश्रयाश्च प्राणभृतां सर्वे व्यवहाराः। आत्मलिङ्गमुदाहरणमात्रमिन्द्रियान्तरविकार इति।

अपरिसंख्यानाच्च स्मृतिविषयस्य। अपरिसंख्याय च स्मृतिविषयमिदमुच्यते

**न स्मृतेः स्मर्तव्यविषयत्वात्**

इति। येयं स्मृतिरगृह्यमाणेऽर्थेऽज्ञासिषममुमर्थमिति, एतस्या ज्ञातृज्ञानविशिष्टः पूर्वज्ञातोऽर्थो विषयो नार्थमात्रम्, ज्ञातवानहममुमर्थम् असावर्थो मया ज्ञातः, अमुस्मिन्नर्थे मम ज्ञानमभूदिति चतुर्विधमप्येतद्वाक्यं स्मृतिविषयप्रज्ञापकं समानार्थम्। सर्वत्र खल्वत्र ज्ञाता ज्ञानं ज्ञेयं च गृह्यते। अथ प्रत्यक्षेऽर्थे या स्मृतिस्तया त्रीणि ज्ञानान्येकस्मिन्नर्थे प्रतिसन्धीयन्ते समानकर्तृकाणि, [१]न नानाकर्तृकाणि नाकर्तृकाणि। किं तर्हि? एककर्तृकाणि। अद्राक्षमहममुमर्थं यमेवैतर्हि पश्यामि। अद्राक्षमिति दर्शनं च दर्शनसंविच्च। न खल्वसंविदिते स्वे दर्शने स्यादेतदद्राक्षमिति। ते खल्वेते द्वे ज्ञाने, यमेवैतर्हि पश्यामीति तृतीयमेकार्थे ज्ञानम्, एवमेकोऽर्थस्त्रिभिर्ज्ञानैर्युज्यमानो नाकर्तृको न नानाकर्तृकः। किं तर्हि? एककर्तृक इति। सोऽयं स्मृतिविषयेऽपरिसंख्यायमाने विद्यमानः प्रज्ञातोऽर्थः प्रतिषिध्यते—नास्त्यात्मा

**स्मृतेः स्मर्तव्यविषयत्वात्**

इति। न चेदं स्मृतिमात्रं स्मर्तव्यार्थमात्रविषयं वा, इदं खलु ज्ञानप्रतिसन्धानवत् स्मृतिप्रतिसन्धानमेकस्य सर्वविषयत्वात्। एकोऽयं ज्ञाता सर्वविषयः स्वानि ज्ञानानि प्रतिसन्धत्ते- अमुमर्थं ज्ञास्यामि, [२]अमुमर्थं विजानामि, अमुमर्थमज्ञासिषम्, अमुमर्थं जिज्ञासमानश्चिरमज्ञात्वाध्यवस्यत्यज्ञासिषमिति। एवं स्मृतिमपि त्रिकालविशिष्टां सुस्मूर्षाविशिष्टां च प्रतिसन्धत्ते। संस्कारसन्ततिमात्रे तु सत्त्वे उत्पद्योत्पद्य संस्कारास्तिरोभवन्ति। स नास्त्येकोऽपि संस्कारो यस्त्रिकालविशिष्टं

१. न नानाकर्तृ...एककर्तृकाणि। Om J　२. अमुमर्थं विजानामि,अमुमर्थम् Om J

ज्ञानं स्मृतिं चानुभवेत् न चानुभवमन्तरेण ज्ञानस्य स्मृतेश्च प्रतिसन्धानमहं ममेति चोत्पद्यते देहान्तरवत्। अतोऽनुमीयते अस्त्येकः सर्वविषयो यः प्रतिदेहं स्वज्ञान-प्रबन्धं स्मृतिप्रबन्धं च प्रतिसन्धत्त इति, यस्य देहान्तरेषु वृत्तेरभावान्न प्रतिसन्धानं भवतीति ॥१४॥

॥चक्षुरद्वैतप्रकरणम् ॥

## [ मनोव्यत्तिरिक्तात्मप्रकरणम् ]

[**वा** पृः ३४२; **टी** पृः४७०; **प** पृः४३६]

**नात्मप्रतिपत्तिहेतूनां मनसि सम्भवात् ॥३।१।१५॥**

न देहादिसङ्घातव्यतिरिक्त आत्मा। कस्मात्? आत्मप्रतिपत्तिहेतूनां मनस्यपि [१]सम्भवात्।

**दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् [ ३।१।१ ]**

इत्येवमादीनामात्मप्रतिपादकानां हेतूनां मनसि सम्भवः, मनो हि सर्वविषयमिति। तस्मात् शरीरेन्द्रियमनोबुद्धिसङ्घातादव्यतिरिक्त आत्मेति॥१५॥

[**वा** पृः ३४२; **टी** पृः४७०; **प** पृः४३६]

**ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम्॥३।१।१६॥**

ज्ञातुः खलु ज्ञानसाधनान्युपपद्यन्ते। चक्षुषा पश्यति, घ्राणेन जिघ्रति, स्पर्शनेन

१. अपि J only

स्पृशति, एवं मन्तुः सर्वविषयस्य मतिसाधनमन्तःकरणभूतं सर्वविषयं विद्यते, येनायं मन्यत इति। एवं सति ज्ञातर्यात्मसंज्ञा न मृष्यते, मनःसंज्ञा चाभ्यनुज्ञायते। मनसि च मनःसंज्ञा न मृष्यते, मतिसाधनं त्वभ्यनुज्ञायते। तदिदं संज्ञाभेदमात्रम् नार्थे विवाद इति।

प्रत्याख्याने वा सर्वेन्द्रियविलोपप्रसङ्गः[१]। अथ मन्तुः सर्वविषयस्य मतिसाधनं सर्वविषयं प्रत्याख्यायते नास्तीति, एवं रूपादिविषयग्रहणसाधनान्यप्यस्य[२] न सन्तीति सर्वेन्द्रियविलोपः प्रसज्यत इति॥१६॥

[**वा** पृः ३४२; **टी** पृः४७०; **प** पृः४३७]

## नियमश्च निरनुमानः ॥३।१।१७॥

योऽयं नियम इष्यते—रूपादिग्रहणसाधनान्यस्य सन्ति, मतिसाधनं सर्वविषयं नास्तीति अयं च नियमो निरनुमानः। नात्रानुमानमस्ति येन नियमं प्रतिपद्येमहीति।

रूपादिभ्यश्च विषयान्तरं सुखादयः। तदुपलब्धौ करणान्तरेण भवितव्यम्[३]। यथा चक्षुषा गन्धो न गृह्यत इति करणान्तरं घ्राणम्, एवं चक्षुर्घ्राणाभ्यां रसो न गृह्यत इति करणान्तरं रसनम् एवं शेषेष्वपि, तथा चक्षुरादिभिः सुखादयो न गृह्यन्त इति करणान्तरेण भवितव्यम्। तच्च ज्ञानायौगपद्यलिङ्गम्। यच्च तत् सुखाद्युपलब्धौ करणान्तरं[४] तच्च ज्ञानायौगपद्यलिङ्गम्। तस्य हीन्द्रियमिन्द्रियं प्रति सन्निधेरसन्निधेश्च न युगपज्ज्ञानान्युत्पद्यन्त इति। तत्र यदुक्तम्,

**आत्मप्रतिपत्तिहेतूनां मनसि सम्भवात्** [ द्रः ३।१।१५ ]

इति तदयुक्तम्॥१७॥

॥मनोव्यत्तिरिक्तात्मप्रकरणम्॥

---

१. प्रसङ्ग Om J २. अस्य J only ३. करणान्तरसद्भावः TC ४. करणं for करणान्तरं TC

## [ आत्मनित्यत्वप्रकरणम् ]

[**वा** पृः ३४३; **टी** पृः४७१; **प** पृः४३८]

किं पुनरयं देहादिसङ्घातादन्यो नित्य उतानित्य इति। कुतः संशयः?

**उभयथा दृष्टत्वात् [ द्रः वै. सू. ( च ) २।२।२२ ]**

संशयः। विद्यमानमुभयथा भवति नित्यमनित्यं च। प्रतिपादिते चात्मसद्भावे संशयानतिवृत्तेरिति।

आत्मसद्भावहेतुभिरेवास्य प्राग्देहभेदादवस्थानं सिद्धम्, ऊर्ध्वमपि देहभेदादवतिष्ठते, कस्मात्?

**पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्तेः ॥३।१।१८॥**

जातः खल्वयं कुमारकोऽस्मिन् जन्मन्यगृहीतेषु हर्षभयशोकहेतुषु हर्षभयशोकान् प्रतिपद्यते लिङ्गानुमेयान्। ते च स्मृत्यनुबन्धादुत्पद्यन्त इति, नातोऽन्यथा। स्मृत्यनुबन्धश्च पूर्वाभ्यासमन्तरेण न भवति पूर्वाभ्यासश्च पूर्वजन्मनि सति भवति, नान्यथेति सिध्यत्येतदवतिष्ठतेऽयमूर्ध्वं देहभेदादिति॥१८॥

[**वा** पृः ३४५; **टी** पृः४७२; **प** पृः४३९]

**पद्मादिषु प्रबोधसम्मीलनविकारवत्तद्विकारः॥३।१।१९॥**

यथा पद्मादिष्वनित्येषु प्रबोधः सम्मीलनं विकारो भवति, एवमनित्यस्यात्मनो हर्षभयशोकसम्प्रतिपत्तिर्विकारः स्यादिति हेत्वभावादयुक्तम्। अनेन

हेतुना पद्मादिषु प्रबोधसम्मीलनविकारवदनित्यस्यात्मनो हर्षादिसम्प्रतिपत्तिर्विकार[१] इति नात्र

**उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः,**
**न वैधर्म्यात् [ द्रः न्याः सू १.१.३४-५ ]**

अस्ति। हेत्वभावादसंबद्धार्थकमपार्थकम् [द्रः ५.२.१०]उच्यत इति।

दृष्टान्ताच्च हर्षादिनिमित्तस्यानिवृत्तिः, या चेयमासेवितेषु विषयेषु हर्षादिसम्प्रतिपत्तिः स्मृत्यनुबन्धकृता प्रत्यात्मं गृह्यते सेयं पद्मादिसम्मीलनदृष्टान्तेन न निवर्तते। यथा चेयं न निवर्तते तथा जातस्यापीति। क्रियाजातौ च पर्णविभागसंयोगौ प्रबोधसम्मीलने, क्रियाहेतुश्च क्रियानुमेयः। एवं च सति किं दृष्टान्तेन प्रतिषिध्यत इति ॥१९॥

[**वा** पृः ३४६; **टी** पृः ४७३; **प** पृः ४४०]

अथ निर्निमित्तः पद्मादिषु प्रबोधसम्मीलनविकार इति मतम्, एवमात्मनोऽपि हर्षादिसम्प्रतिपत्तिरिति? तच्च—

**नोष्णशीतवर्षाकालनिमित्तत्वात् पञ्चात्मकविकाराणाम्॥३।१।२०॥**

उष्णादिषु सत्सु भावादसत्सु चाभावात् तन्निमित्ताः पञ्चभूतानुग्रहेण निर्वृत्तानां पद्मादिद्रव्याणां प्रबोधसम्मीलनविकारा न निर्निमित्ता इति। एवं हर्षादयोऽपि विकारा निमित्ताद् भवितुमर्हन्ति, न निमित्तमन्तरेण। न चान्यत् पूर्वाभ्यस्तस्मृत्यनुबन्धान्निमित्तमस्तीति। न चोत्पत्तिनिरोधकारणानुमानमात्मनो दृष्टान्तात्। न हर्षादीनां निमित्तमन्तरेणोत्पत्तिः। नोष्णादिवन्निमित्तान्तरोपादानं हर्षादीनाम्। तस्माद् अयुक्तमेतदिति॥२०॥

---

१. विकार Om TC

[**वा** पृः ३४६; **टी** पृः ४७३; **प** पृः ४४०]

इतश्च नित्य आत्मा—

## प्रेत्याहाराभ्यासकृतात्स्तन्याभिलाषात् ॥३।१।२१॥

जातमात्रस्य वत्सस्य प्रवृत्तिलिङ्गः स्तन्याभिलाषो गृह्यते। स च नान्तरेणाहाराभ्यासम्। कया युक्त्या? दृश्यते हि शरीरिणां क्षुधा पीड्यमानानामाहाराभ्यासकृतात् स्मरणानुबन्धात् आहाराभिलाषः। न च पूर्वशरीरमन्तरेण आहाराभ्यासो[१] जातमात्रस्योत्पद्यत इति। तेनानुमीयतेऽभूतत्पूर्वं[२] शरीरं यत्रानेनाहारोऽभ्यस्त इति। स खल्वयमात्मा पूर्वशरीरात् प्रेत्य शरीरान्तरमापन्नः क्षुत्पीडितः पूर्वाभ्यस्तमाहारमनुस्मरन् स्तन्यमभिलषतीति। तस्मान्न देहभेदादात्मा भिद्यते, भवत्येवोर्द्ध्वं देहभेदादिति॥२१॥

[**वा** पृः ३४६; **टी** पृः ४७३; **प** पृः ४४०]

## अयसोऽयस्कान्ताभिगमनवत्तदुपसर्पणम् ॥३।१।२२॥

यथा खल्वयोऽभ्यासमन्तरेणायस्कान्तमुपसर्पति, एवमाहाराभ्यासमन्तरेण बालः स्तन्यमभिलषतीति ॥२२॥

[**वा** पृः३४७; **टी** पृः ४७४; **प** पृः ४४०]

किमिदमयसोऽयस्कान्ताभिसर्पणं निर्निमित्तमथ निमित्तादिति? निर्निमित्तं तावत्—

---

१. असौ for आहाराभ्यासो TC २. भूतपूर्वं for अभूत्तत्पूर्वं TC

**नान्यत्र प्रवृत्त्यभावात् ॥३।१।२३॥**

यदि निर्निमित्तम्, लोष्टादयोऽप्ययस्कान्तमुपसर्पेयुः। न जातु नियमे कारणमस्तीति। अथ निमित्तात्, तत्केनोपलभ्यत इति। क्रियालिङ्गः क्रियाहेतुः, क्रियानियमलिङ्गश्च क्रियाहेतुनियमः। तेनान्यत्र प्रवृत्त्यभावः। [1]बालस्यापि नियतमुपसर्पणक्रियोपलभ्यते। न च स्तन्याभिलाषलिङ्गमन्यदाहाराभ्यासकृतात् स्मरणानुबन्धात्। निमित्तं दृष्टान्तेनोपपाद्यते। न चासति निमित्ते कस्यचिदुत्पत्तिः। न च दृष्टान्तो दृष्टमभिलाषहेतुं बाधते। तस्मादयसोऽयस्कान्ताभिगमनमदृष्टान्त इति।

अयसः खल्वपि नान्यत्र प्रवृत्तिर्भवति, न जात्वयो लोष्टमुपसर्पति। किंकृतोऽस्य नियम इति? यदि कारणनियमात्, स च क्रियानियमलिङ्गः एवं बालस्यापि नियतविषयोऽभिलाषः कारणनियमाद् भवितुमर्हतीति। तच्च कारणमभ्यस्तस्मरणमन्यद्वेति दृष्टेन विशिष्यते। दृष्टो हि शरीरिणामभ्यस्तस्मरणादाहाराभिलाष इति॥२३॥

[**वा** पृः ३४७; **टी** पृः४७४; **प** पृः४४१]

इतश्च नित्य आत्मा। कस्मात्?

**वीतरागजन्मादर्शनात्॥३।१।२४॥**

सरागो जायत इत्यर्थादापद्यते। अयं जायमानो रागानुबद्धो जायते, रागस्य च पूर्वानुभूतविषयानुचिन्तनं योनिः। पूर्वानुभवश्च विषयाणामन्यस्मिन् जन्मनि [2]पूर्वशरीरमन्तरेण नोपपद्यते। सोऽयमात्मा पूर्वशरीरानुभूतान् विषयाननुस्मरन् तेषु तेषु रज्यते। तथा चायं द्वयोर्जन्मनोः[3] प्रतिसन्धिः। एवं पूर्वशरीरस्य पूर्वतरेण,

१. बाल...भ्यते। Om J  २. पूर्व J only  ३. शरीरयोः for जन्मनोः J

पूर्वतरस्य पूर्वतमेनेत्यादिनानादिश्चेतनस्य शरीरयोगः, अनादिश्च रागानुबन्ध इति सिद्धं नित्यत्वमिति ॥२४॥

[**वा** पृ:३४८; **टी** पृ:४७५; **प** पृ:४४१]

कथं पुनर्ज्ञायते पूर्वानुभूतविषयानुचिन्तनजनितो जातस्य रागः, न पुनः—

**सगुणद्रव्योत्पत्तिवत्तदुत्पत्तिः ॥३।१।२५॥**

यथोत्पत्तिधर्मकस्य द्रव्यस्य गुणा कारणत उत्पद्यन्ते, तथोत्पत्तिधर्मकस्यात्मनो रागः कुतश्चिदुत्पद्यते। अत्रायमुदितानुवादो निदर्शनार्थः ॥२५॥

[**वा** पृ: ३४८; **टी** पृ:४७५; **प** पृ:४४१]

**न, सङ्कल्पनिमित्तत्वाद्रागादीनाम् ॥३।१।२६॥**

न खलु सगुणद्रव्योत्पत्तिवत् तयोरुत्पत्तिरात्मनो रागस्य च। कस्मात्? सङ्कल्पनिमित्तत्वाद् रागादीनाम्। अयं खलु प्राणिनां विषयानासेवमानानां सङ्कल्पजनितो रागो गृह्यते। सङ्कल्पश्च पूर्वानुभूतविषयानुचिन्तनयोनिः। तेनानुमीयते, जातस्यापि पूर्वानुभूतविषयचिन्तनकृतो राग इति। आत्मोत्पादाधिकरणात्तु रागोत्पत्तिर्भवन्ती सङ्कल्पादन्यस्मिन् रागकारणे सति वाच्या कार्यद्रव्यगुणवत्। न चात्मोत्पादः सिद्धो नापि सङ्कल्पादन्यद् रागकारणमस्ति। तस्मादयुक्तं सगुणद्रव्योत्पत्तिवत् तयोरुत्पत्तिरिति।

अथापि सङ्कल्पादन्यद् रागकारणं धर्माधर्मलक्षणमदृष्टमुपादीयते, तथापि पूर्वशरीरयोगोऽप्रत्याख्येय इति। तत्र हि तस्य निर्वृत्तिः नास्मिन् जन्मनीति।

**तन्मयत्वाद् रागः [ द्रः वै. सू. ( च ) ६.२.१३ ]**

इति। विषयाभ्यासः खल्वयं भावनाहेतुस्तन्मयत्वमुच्यत इति।

**जातिविशेषाच्च रागविशेषः [ वै. सू. ( च ) ६.२.१६ ]**

इति। कर्म खल्विदं जातिविशेषनिर्वर्तकं तादर्थ्यात् ताच्छब्द्यं विज्ञायते, तस्मादनुपपन्नं सङ्कल्पादन्यद् रागकारणमिति ॥२६॥

॥आत्मनित्यत्वप्रकरणम्॥

## [ शरीरपरीक्षाप्रकरणम् ]

[ **वा** पृ:३४८; **टी** पृ:४७६; **प** पृ:४४२]

अनादिश्चेतनस्य शरीरयोग इत्युक्तम्। स्वकृतकर्मनिमित्तं चास्य शरीरं सुख-दुःखभोगाधिष्ठानम्। तत् परीक्ष्यते, किं घ्राणादिवदेकप्रकृतिकमथ नानाप्रकृतीति। कुतः संशयः? विप्रतिपत्तेः संशयः पृथिव्यादीनि भूतानि संख्याविकल्पेन शरीरप्रकृतिरिति प्रतिजानत इति। किं तत्र तत्त्वम्?

**पार्थिवं गुणान्तरोपलब्धेः॥३।१।२७॥**

तत्र मानुषं शरीरं पार्थिवम्। कस्मात्? गुणान्तरोपलब्धेः[१]। गन्धवती पृथिवी, गन्धवच्च शरीरम्। अबादीनामगन्धत्वात् तत्प्रकृत्यगन्धं स्यात्। न त्विदमबादि-भिरसम्पृक्तया पृथिव्यारब्धं चेष्टेन्द्रियार्थाश्रयभावेन कल्पत इत्यतः पञ्चानां भूतानां संयोगे सति शरीरं भवति।

**भूतसंयोगो हि मिथः पञ्चानां न निषिद्धः**

**[ द्रः वै. सू. ( च ) ४।२।३ ]**

---

१. उत्पत्तेः for उपलब्धेः J

इति। आप्यतैजसवायव्यानि च लोकान्तरे शरीराणि। तेष्वपि च भूतसंयोगः पुरुषार्थतन्त्र इति। स्थाल्यादिद्रव्यनिष्पत्तावपि निःसंशयो नाबादिसंयोगमन्तरेण निष्पत्तिरिति॥२७॥

[**वा** पृः ३४९; **टी** पृ:४७७; **प** पृ:४४३]

**पार्थिवाप्यतैजसं तद्गुणोपलब्धेः॥३।१।२८॥**

[**वा** पृः ३४९; **टी** पृः ४७७; **प** पृ:४४३]

**निःश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम्॥३।१।२९॥**

[**वा** पृः ३४९; **टी** पृ:४७७; **प** पृ:४४३]

**गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम् ॥३।१। ३०॥**

त इमे सन्दिग्धत्वादहेतव इत्युपेक्षितवान् **सूत्रकारः**। कथं सन्दिग्धाः? सति च प्रकृतिभावे भूतानां धर्मोपलब्धिरसति च संयोगस्याप्रतिषेधात् सन्निहितानामिति, यथा स्थाल्यामुदकतेजोवाय्वाकाशानामिति। तदिदमनेकभूतप्रकृति शरीरम-गन्धमरसमरूपमस्पर्शं च प्रकृत्यनुविधानात् स्यात्। न त्विदमित्थम्भूतम्। तस्मात्—

**पार्थिवं गुणान्तरोपलब्धेः**

इति ॥२८-३०॥

[**वा** पृः ३५०; **टी** पृः ४७८; **प** पृः४४६]

**श्रुतिप्रामाण्याच्च ॥३।१।३१॥**

सूर्यं ते चक्षुर्गच्छतात् [द्रः ऋग्वेदः १०.१६.३] इत्यत्र मन्त्रे पृथिवी ते शरीरमिति श्रूयते। तदिदं प्रकृतौ विकारस्य प्रलयाभिधानमिति। सूर्यं ते चक्षुः स्पृणोमि [ ]इत्यत्र च मन्त्रान्तरे पृथिवीं ते शरीरं स्पृणोमीति श्रूयते। सेयं कारणाद् विकारस्य स्पृतिरभिधीयत इति। स्थाल्यादिषु च तुल्यजातीयानामेककार्यारम्भदर्शनाद् विजातीयानामेककार्यारम्भानुपपत्तिः॥३१॥

॥शरीरपरीक्षाप्रकरणम्॥

## [ इन्द्रियभौतिकत्वप्रकरणम् ]

[**वा** पृः ३५१; **टी** पृः ४७८; **प** पृः४४७]

अथेदानीमिन्द्रियाणि प्रमेयक्रमेण विचार्यन्ते, किमाव्यक्तिकान्याहोस्विद् भौतिकानीति। कुतः संशयः?—

**कृष्णसारे सत्युपलम्भाद् व्यतिरिच्य चोपलम्भात् संशयः॥३। १।३२॥**

कृष्णसारं भौतिकम्। तस्मिन्ननुपहते रूपोपलब्धिः, उपहते चानुपलब्धिरिति। व्यतिरिच्य कृष्णसारमवस्थितस्य विषयस्योपलम्भो न कृष्णसारप्राप्तस्य। न चाप्राप्यकारित्वमिन्द्रियाणाम्, तदिदमभौतिकत्वे विभुत्वात् सम्भवति। एवमुभयधर्मोपलब्धेः[१] संशय इति॥३२॥

१. उत्पत्तेः for उपलब्धेः J

[**वा** पृः ३५२; **टी** पृः ४७९; **प** पृः४४८]

अभौतिकानीत्याह। कस्मात्?

**महदणुग्रहणात् ॥३।१।३३॥**

महदिति महत्तरं महत्तमं चोपलभ्यते, यथा न्यग्रोधपर्वतादि। अण्विति अणुतरमणुतमं च गृह्यते। यथा न्यग्रोधधानादि। तदुभयमुपलभ्यमानं चक्षुषो भौतिकत्वं बाधते। भौतिकं हि यावत् तावत एव व्यापकम्। अभौतिकं तु विभुत्वात् सर्वव्यापकमिति॥३३॥

[**वा** पृः ३५४; **टी** पृः४८०; **प** पृः४४९]

न महदणुग्रहणमात्रादभौतिकत्वं विभुत्वं चेन्द्रियाणां शक्यं प्रतिपत्तुम्। इदं खलु—

**रश्म्यर्थसन्निकर्षविशेषात्तद्ग्रहणम्॥३।१।३४॥**

तयोर्महदण्वोर्ग्रहणं चक्षूरश्मेश्चार्थस्य च सन्निकर्षविशेषाद् भवति। यथा प्रदीपरश्मेरर्थस्य चेति। रश्म्यर्थसन्निकर्षविशेषश्चावरणलिङ्गः। चाक्षुषो हि रश्मिः कुड्यादिभिरावृतमर्थं न प्रकाशयति यथा प्रदीपरश्मिरिति॥३४॥

[**वा** पृः ३५५; **टी** पृः४८०; **प** पृः४४९]

आवरणानुमेयत्वे सतीदमाह—

**तदनुपलब्धेरहेतुः॥३।१।३५॥**

**रूपस्पर्शवद्धि तेजः [ द्रः वै.सू. ( च ) २।१।३१ ]**

**महत्यनेकद्रव्यवत्त्वाद् रूपवत्त्वाच्चोपलब्धिः [ वै.सू. ( च ) ४।१।६ ]** इति। [1]प्रदीपरश्मिवत्प्रत्यक्षत उपलभ्येत चाक्षुषो रश्मिर्यदि स्यादिति ॥३५॥

[**वा** पृः ३५५; **टी** पृः४८१; **प** पृः४४९]

**नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः ॥३।१।३६॥**

सन्निकर्षप्रतिषेधार्थेनावरणेन लिङ्गेनानुमीयमानस्य रश्मेर्या प्रत्यक्षतोऽनुपलब्धिर्नासावभावं प्रतिपादयति, यथा चन्द्रमसः परभागस्य पृथिव्याश्चाधोभागस्येति ॥३६॥

[**वा** पृः३५६; **टी** पृः४८१; **प** पृः४४९]

**द्रव्यगुणधर्मभेदाच्चोपलब्धिनियमः ॥३।१।३७॥**

भिन्नः खल्वयं द्रव्यधर्मो गुणधर्मश्च। महदनेकद्रव्यवच्च विषक्तावयवमाप्यं द्रव्यं प्रत्यक्षतो नोपलभ्यते, [2]रूपं चास्यानुद्भूतं नोपलभ्यते, स्पर्शस्तु शीतो गृह्यते। तस्य च द्रव्यस्यानुबन्धाद् हेमन्तशिशिरौ कल्प्येते। तथाविधमेव च तैजसं द्रव्यमनुद्भूतरूपं सह रूपेण नोपलभ्यते, स्पर्शस्त्वस्योष्ण उपलभ्यते। तस्य च द्रव्यस्यानुबन्धाद् ग्रीष्मवसन्तौ कल्प्येते। यत्र त्वेषा भवति,

**[3]अनेकद्रव्येण द्रव्येण समवायाद् रूपविशेषाच्च रूपोपलब्धिः**
**[ द्रः वै. सू. ( च ) ४।१।९ ]**।

---

१. रश्मि J only २. रूपं...भ्यते J only ३. एतस्य न्यायसूत्रत्वेनास्वीकारे कारणपरम्परा मुखबन्धे द्रष्टव्या।

तत्र रूपं च द्रव्यं च तदाश्रयः प्रत्यक्षतो गृह्यते। रूपविशेषस्तु यद्भावात् क्वचिद् रूपोपलब्धिः, यदभावाच्च क्वचिदनुपलब्धिः, स रूपधर्मोऽयमुद्भव-समाख्यात इति। अनुद्भूतरूपस्पर्शश्चायं नायनो रश्मिः, तस्मात् प्रत्यक्षतो नोपलभ्यते। दृष्टश्च तेजसो धर्मभेदः, उद्भूतरूपस्पर्शं प्रत्यक्षं तेजो यथा आदित्यरश्मयः। उद्भूतरूपमनुद्भूतस्पर्शं च प्रत्यक्षं तेजो यथा प्रदीपरश्मयः, उद्भूतस्पर्शमनु-द्भूतरूपमप्रत्यक्षं यथाबादिसंयुक्तं तेजः। अनुद्भूतरूपस्पर्शोऽप्रत्यक्षश्चाक्षुषो रश्मिरिति॥३७॥

[**वा** पृः ३५७; **टी** पृः४८१; **प** पृः४४९]

**कर्मकारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः॥३।१।३८॥**

यथा च चेतनस्यार्थो विषयोपलब्धिभूतः सुखदुःखोपलब्धिभूतश्च कल्प्यते तथेन्द्रियाणि व्यूढानि, विषयप्राप्त्यर्थश्च रश्मेश्चाक्षुषस्य व्यूहः। रूपस्पर्शानभिव्यक्तिश्च व्यवहारप्रक्लृप्त्यर्था। द्रव्यविशेषे च प्रतिघातादावरणोपपत्तिर्व्यवहारार्था। सर्वद्रव्याणां विश्वरूपो व्यूह इन्द्रियवत् कर्मकारित इति पुरुषार्थतन्त्रः। कर्म तु धर्माधर्मभूतं चेतनस्योपभोगार्थमिति।

अव्यभिचाराच्च प्रतिघातो भौतिकधर्मः। यश्चायमावरणोपलम्भादिन्द्रियस्य द्रव्यविशेषे प्रतिघातः स भौतिकधर्मो न भूतानि व्यभिचरति। नाभौतिकं किञ्चित् प्रतिघातधर्मकं दृष्टमिति। अप्रतिघातस्तु व्यभिचारी भौतिकाभौतिकयोः समानत्वादिति।

यदपि मन्येत, यदि प्रतिघाताद्भौतिकानीन्द्रियाणि, अप्रतिघातादभौतिकानीति प्राप्तम्। दृष्टश्चाप्रतिघातः, **काचाभ्रपटलस्फटिकान्तरितोपलब्धेः [ द्रः ३।१। ४४ ]**, तन्न युक्तम्। कस्मात्? यस्माद् भौतिकमपि न प्रतिहन्यते, काचाभ्रपटल-

स्फटिकान्तरितप्रकाशात् प्रदीपरश्मीनाम्, स्थाल्यादिषु च पाचकस्य तेजसोऽप्रतिघातः ॥३८॥

[**वा** पृः ३५८; **टी** पृः ४८२; **प** पृः ४५०]

उपपद्यते चानुपलब्धिः कारणभेदात्—

**मध्यन्दिनोल्काप्रकाशानुपलब्धिवत्तदनुपलब्धिः ॥३।१।३९॥**

यथा **अनेकद्रव्येण [1]द्रव्येण समवायाद् रूपविशेषाच्चोपलब्धिः [द्रः वै. सू. (च) ४।१।९]** इति सत्युपलब्धिकारणे मध्यन्दिनोल्काप्रकाशो नोपलभ्यते आदित्यप्रकाशेनाभिभूतः, एवं

**महत्यनेकद्रव्यवत्त्वाद् रूपविशेषाच्चोपलब्धिः**

**[वै. सू. (च) ४।१।६]**

इति सत्युपलब्धिकारणे चाक्षुषो रश्मिर्नोपलभ्यते निमित्तान्तरतः। तच्च व्याख्यातमनुद्भूतरूपस्पर्शस्य द्रव्यस्य प्रत्यक्षतोऽनुपलब्धिरिति ॥३९॥

[**वा** पृः ३५८; **टी** पृः४८२; **प** पृः४५०]

अत्यन्तानुपलब्धिश्चाभावकारणम्। यो हि ब्रवीति लोष्टप्रकाशो मध्यन्दिन आदित्यप्रकाशाभिभवान्नोपलभ्यत इति, तस्यैतत्स्यात्—

**न, रात्रावप्यनुपलब्धेः ॥३।१।४०॥**

अप्यनुमानतोऽनुपलब्धेरिति। एवमत्यन्तानुपलब्धेर्लोष्टप्रकाशो नास्ति, न त्वेवं चाक्षुषो रश्मिरिति ॥४०॥

---

१. द्रव्येण Om C

[**वा** पृ:३५९; **टी** पृ:४८२; **प** पृ:४५०]

उपपन्नरूपा चेयम्—

**बाह्यप्रकाशानुग्रहाद् विषयोपलब्धेरनभिव्यक्तितोऽनुपलब्धिः ॥३।१।४१॥**

बाह्येन प्रकाशेनानुगृहीतं चक्षुर्विषयस्य ग्राहकम्, तदभावेऽनुपलब्धिः। सति च प्रकाशानुग्रहे शीतस्पर्शोपलब्धौ च सत्यां तदाश्रयस्य द्रव्यस्य चक्षुषा अग्रहणं रूपस्यानुद्भूतत्वात्। सेयं रूपानभिव्यक्तितो रूपाश्रयस्य द्रव्यस्यानुपलब्धिर्दृष्टा। तत्र यदुक्तं तदनुपलब्धेरहेतुरित्येतदयुक्तम्॥४१॥

[**वा** पृ: ३५९; **टी** पृ:४८२; **प** पृ:४५१]

कस्मात् पुनरभिभवोऽनुपलब्धिकारणं चाक्षुषस्य रश्मेर्नोच्यत इति?

**अभिव्यक्तौ चाभिभवात् ॥३।१।४२॥**

बाह्यप्रकाशानुग्रहनिरपेक्षतायां चेति चार्थः। यद् रूपमभिव्यक्तमुद्भूतं बाह्यप्रकाशानुग्रहं च नापेक्षते तद्विषयोऽभिभवः, विपर्ययेऽभिभवाभावात्। अनुद्भूतरूपत्वाच्चानुपलभ्यमानं बाह्यप्रकाशानुग्रहाच्चोपलभ्यमानं नाभिभूयत इति। एवमुपपन्नम् अस्ति चाक्षुषो रश्मिरिति ॥४२॥

[**वा** पृ: ३६०; **टी** पृ:४८३; **प** पृ:४५१]

**नक्तञ्चरनयनरश्मिदर्शनाच्च ॥३।१।४३॥**

दृश्यन्ते च नक्तं नयनरश्मयो नक्तञ्चराणां वृषदंशप्रभृतीनाम्। तेन शेषस्यानुमानमिति। जातिभेदवदिन्द्रियभेद इति चेत्? धर्मभेदमात्रं चानुपपन्नम्, आवरणस्य प्राप्तिप्रतिषेधार्थस्य दर्शनादिति ॥४३ ॥

[**वा** पृ:३६०; **टी** पृ: ४८४; **प** पृ:४५२]

इन्द्रियार्थसन्निकर्षस्य ज्ञानकारणत्वानुपपत्तिः। कस्मात्?

**अप्राप्य ग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धेः ॥३ ।१ । ४४ ॥**

तृणादि सर्पद् द्रव्यं काचेऽभ्रपटले वा प्रतिहतं दृष्टम्। अव्यवहितेन सन्निकृष्यते। व्याहन्यते वै प्राप्तिर्व्यवधानेनेति। यदि च रश्म्यर्थसन्निकर्षो ग्रहणहेतुः स्यात्, न व्यवहितस्य सन्निकर्ष इत्यग्रहणं स्यात्। अस्ति चेयं काचाभ्रपटलस्फटिकान्तरितोपलब्धिः। सा ज्ञापयत्यप्राप्यकारीणीन्द्रियाणि। अत एवाभौतिकानि, प्राप्यकारित्वं हि भौतिकधर्म इति ॥४४ ॥

[**वा** पृ: ३६१; **टी** पृ:४८४; **प** पृ:४५२]

**कुड्यान्तरितानुपलब्धेरप्रतिषेधः ॥३ ।१ ।४५ ॥**

अप्राप्यकारित्वे सतीन्द्रियाणां [१]कुड्यान्तरितस्यानुपलब्धिर्न स्यात् ॥४५ ॥

---

१. कुड्यादिभिरन्तरितस्या० J

[**वा** पृः ३६१; **टी** पृ:४८४; **प** पृ:४५२]

प्राप्यकारित्वेऽपि तु काचाभ्रपटलस्फटिकान्तरितोपलब्धिर्न स्यात्—

**अप्रतीघातात् सन्निकर्षोपपत्तिः ॥३।१।४६॥**

न च काचोऽभ्रपटलं वा नयनरश्मिं विष्टभ्नाति। सोऽप्रतिहन्यमानः सन्निकृष्यत इति ॥४६॥

[**वा** पृः ३६१; **टी** पृ:४८४; **प** पृ:४५२]

यश्च मन्यते न भौतिकस्याप्रतीघात इति, तत्र—

**आदित्यरश्मेः स्फटिकान्तरितेऽपि दाह्येऽविघातात् ॥३।१।४७॥**

आदित्यरश्मेरविघातात्। स्फटिकान्तरितेऽप्यविघातात्। दाह्येऽविघातात्। अविघातादिति च पदाभिसम्बन्धभेदाद् वाक्यभेद इति। यथावाक्यं चार्थभेद इति। आदित्यरश्मिः कुम्भादिषु न प्रतिहन्यते। अप्रतिघातात् कुम्भस्थमुदकं तपति। प्राप्तौ हि द्रव्यान्तरगुणस्य उष्णस्य स्पर्शस्य ग्रहणम्। तेनैव च शीतस्पर्शाभिभव इति। स्फटिकान्तरितेऽपि प्रकाशनीये प्रदीपरश्मीनामप्रतिघातः। अप्रतिघातात् प्राप्तस्य [१]प्रकाशनमिति। भर्जनकपालादिस्थं च द्रव्यमाग्नेयेन तेजसा दह्यते, तत्राविघातात् प्राप्तिः। प्राप्तौ तेन दाहः। नाप्राप्यकारि तेज इति।

अविघातादिति च केवलं पदमुपादीयते। कोऽयमविघातो नाम? अव्युह्यमानावयवेन व्यवधायकेन द्रव्येण सर्वतो द्रव्यस्याविष्टम्भः क्रियाहेतोरप्रतिबन्धः प्राप्तेरप्रतिषेध इति। दृष्टं हि कलसनिषक्तानामपां बहिः शीतस्पर्शस्य ग्रहणम्। न

१. ग्रहणम् for प्रकाशनम् J

चेन्द्रियेणासन्निकृष्टस्य द्रव्यस्य स्पर्शोपलब्धिः दृष्टौ च प्रस्पन्दपरिस्रवौ। तत्र काचाभ्रपटलादिभिर्नयनरश्मेरप्रतिघाताद् व्यतिभिद्यार्थेन सह सन्निकर्षादुपपन्नं ग्रहणमिति।।।४७।।

[**वा** पृ: ३६२; **टी** पृ: ४८५; **प** पृ: ४५२]

**नेतरेतरधर्मप्रसङ्गात् ।।३।१।४८।।**

काचाभ्रपटलादिवद् वा कुड्यादिभिरप्रतीघातः, कुड्यादिवद् वा काचाभ्रपटलादिभिः प्रतीघात इति प्रसज्यते। नियमे कारणं वाच्यमिति।।४८।।

[**वा** पृ:३६२; **टी** पृ: ४८५; **प** पृ: ४५३]

**आदर्शोदकयोः प्रसादस्वाभाव्याद्रूपोपलब्धिवत् तदुपलब्धिः।।३।१।४९।।**

आदर्शोदकयोः प्रसादो रूपविशेषः स्वो धर्मो नियमदर्शनात् प्रसादस्य वा स्वो धर्मो रूपोपलम्भनम्। यथा आदर्शे प्रतिहतस्य परावृत्तस्य नयनरश्मेः स्वेन मुखेन सन्निकर्षे सति स्वमुखोपलम्भनं प्रतिबिम्बग्रहणाख्यमादर्शरूपानुग्रहात् तन्निमित्तं भवति, आदर्शरूपोपघाते तदभावात्, कुड्यादिषु च प्रतिबिम्बग्रहणं न भवति, [१]द्रव्यस्वभावनियमात्, एवं काचाभ्रपटलादिभिरविघातश्चक्षूरश्मेः[२] कुड्यादिभिश्च प्रतिघातो द्रव्यस्वभावनियमादिति।।४९।।

---

१. द्रव्य...त् Om TC        २. प्रतिषेधः for अविघातः J

[**वा** पृः ३६३; **टी** पृः ४८५; **प** पृः४५३]

## दृष्टानुमितानां हि नियोगप्रतिषेधानुपपत्तिः ॥३।१।५०॥

प्रमाणस्य तत्त्वविषयत्वात्। न खलु भोः परीक्षमाणेन दृष्टानुमिता अर्थाः शक्या नियोक्तुमेवं भवतेति, नापि प्रतिषेद्धुमेवं मा भूतेति। न हीदमुपपद्यते रूपवद् गन्धोऽपि चाक्षुषो भवत्विति, गन्धवद् वा रूपमपि चाक्षुषं मा भूदिति। अग्निप्रतिपत्तिवद् धूमेनोदकप्रतिपत्तिरपि भवत्विति, उदकाप्रतिपत्तिवद् वा धूमेनाग्निप्रतिपत्तिरपि मा भूदिति। किं कारणम्? यथा खल्वर्था भवन्ति य एषां स्वो भावः स्वो धर्म इति, तथाभूताः प्रमाणेन प्रतिपद्यन्त इति। तथाभूतविषयकं हि प्रमाणमिति। इमौ खलु नियोगप्रतिषेधौ भवता देशितौ काचाभ्रपटलादिवद् वा कुड्यादिभिरप्रतिघातो भवतु, कुड्यादिवद् वा काचाभ्रपटलादिभिरप्रतिघातो मा भूदिति। न दृष्टानुमिताः खल्विमे द्रव्यधर्माः। प्रतिघाताप्रतिघातयोर्ह्युपलब्ध्यनुपलब्धी व्यवस्थापिके। व्यवहितानुपलब्ध्यानुमीयते कुड्यादिभिः प्रतिघातः व्यवहितोपलब्ध्या चानुमीयते काचाभ्रपटलादिभिरप्रतिघात इति॥५०॥

॥इन्द्रियभौतिकत्वप्रकरणम्॥

## [ इन्द्रियनानात्वप्रकरणम् ]

[**वा** पृः ३६४; **टी** पृः ४८६; **प** पृः४५३]

अथापि खल्वेकमिन्द्रियम्, बहूनि वेन्द्रियाणि? कुतः संशयः?

## स्थानान्यत्वे नानात्वादवयविनानास्थानत्वाच्च संशयः॥३।१।५१॥

बहूनि च द्रव्याणि नानास्थानानि दृश्यन्ते। नानास्थानश्च सन्नेकोऽवयवी चेति। तेनेन्द्रियेषु भिन्नस्थानेषु संशय इति॥५१॥

[**वा** पृः ३६४; **टी** पृः४८७; **प** पृः ४५५]

एकमिन्द्रियम्—

**त्वगव्यतिरेकात्॥३।१।५२॥**

त्वगेकमिन्द्रियमित्याह। कस्मात्? अव्यतिरेकात्। न त्वचा किञ्चिदि-न्द्रियाधिष्ठानं न प्राप्तम्। न चासत्यां त्वचि किञ्चिद्विषयग्रहणं भवति, यया सर्वेन्द्रियस्थानानि व्याप्तानि, यस्यां च सत्यां विषयग्रहणं भवति सा त्वगेक-मिन्द्रियमिति।

नेन्द्रियान्तरार्थानुपलब्धेः। स्पर्शोपलब्धिलक्षणायां सत्यां त्वचि गृह्यमाणे त्वगिन्द्रियेण स्पर्शे इन्द्रियान्तरार्था रूपादयो न गृह्यन्ते अन्धादिभिः। न च स्पर्शग्राहकादिन्द्रियादिन्द्रियान्तरमस्तीति स्पर्शवदन्धादिभिर्गृह्येरन् रूपादयः, न तु गृह्यन्ते। तस्मान्नैकमिन्द्रियं त्वगिति।

त्वगवयवविशेषेण धूमोपलब्धिवत् तदुपलब्धिः। यथा त्वचोऽवयवविशेषः कश्चिच्चक्षुषि सन्निकृष्टो धूमस्पर्शं गृह्णाति नान्यः, एवं त्वचोऽवयवविशेषा रूपादिग्राहकाः, तेषामुपघातादन्धादिभिर्न गृह्यन्ते रूपादय इति।

[१]व्याहतत्वादहेतुः। त्वगव्यतिरेकादेकमिन्द्रियमित्युक्त्वा त्वगवयवविशेषेण धूमोपलब्धिवद् रूपाद्युपलब्धिरित्युच्यते। एवं च सति नानाभूतानि विषयग्राहकाणि विषयव्यवस्थानात्, तद्भावे विषयग्रहणस्य भावाद् तदुपघाते चाभावात्। तथा च पूर्वो वाद उत्तरेण वादेन व्याहन्यत इति।

१. उत्तरम् added J; व्याघातात् for व्याहतत्वात् J

सन्दिग्धश्चाव्यतिरेकः। पृथिव्यादिभिरपि भूतैरिन्द्रियाधिष्ठानानि व्याप्तानि। न च तेष्वसत्सु विषयग्रहणं भवतीति। तस्मान्न त्वगन्यद् वा सर्वविषयमेकमिन्द्रियमिति॥५२॥

[**वा** पृः ३६५; **टी** पृः ४८८; **प** पृः ४५५]

**न, युगपदर्थानुपलब्धेः॥३।१।५३॥**

आत्मा मनसा सम्बध्यते, मन इन्द्रियेण, इन्द्रियं सर्वार्थैः सन्निकृष्टमिति आत्मेन्द्रियमनोऽर्थसन्निकर्षेभ्यो युगपद्ग्रहणानि स्युः। न च युगपद् रूपादयो गृह्यन्ते। तस्मान्नैकमिन्द्रियं सर्वविषयमस्तीति। असाहचर्याच्च विषयग्रहणानां नैकमिन्द्रियं सर्वविषयकम्। साहचर्ये हि विषयग्रहणानामन्धाद्यनुपपत्तिरिति॥५३॥

[**वा** पृ:३६७; **टी** पृ:४८८; **प** पृ:४५५]

**विप्रतिषेधाच्च न त्वगेका॥३।१।५४॥**

न च खलु त्वगेकमिन्द्रियम्, व्याघातात्। त्वचा रूपाण्यप्राप्तानि गृह्यन्त इति अप्राप्यकारित्वे स्पर्शादिष्वप्येवं प्रसङ्गः। स्पर्शादीनां च प्राप्तानां ग्रहणाद् [१]रूपादीनामप्राप्तानामग्रहणमिति प्राप्तम्। [२]सामिकारित्वमिति चेत्? आवरणानुपपत्तेर्विषयमात्रस्य ग्रहणम्। अथापि मन्येत प्राप्ताः स्पर्शादयस्त्वचा गृह्यन्ते, रूपाणि त्वप्राप्तानीति? एवं तर्हि नास्त्यावरणम्। आवरणानुपपत्तेश्च रूपमात्रस्य ग्रहणम्, व्यवहितस्य चाव्यवहितस्य चेति। दूरान्तिकानुविधानं च रूपोपलब्ध्यनुपलब्ध्योर्न

१. प्राप्तानां ग्रहणम् for अप्राप्तानामग्रहणम् TC  २. प्राप्याप्राप्यकारित्वम् C

स्यात्। अप्राप्तं त्वचा गृह्यते रूपमिति दूरे रूपस्याग्रहणमन्तिके च ग्रहणमित्येतन्न स्यादिति॥५४॥

[**वा** पृ: ३६७; **टी** पृ: ४८८; **प** पृ:४५५]

प्रतिषेधाच्च नानात्वसिद्धौ स्थापनाहेतुरप्युपादीयते—

**इन्द्रियार्थपञ्चत्वात् ॥३।१।५५॥**

अर्थः प्रयोजनम्। तत् पञ्चविधमिन्द्रियाणाम्। स्पर्शनेनेन्द्रियेण स्पर्शग्रहणे सति न तेनैव रूपं गृह्यत इति रूपग्रहणप्रयोजनं चक्षुरनुमीयते। स्पर्शरूपग्रहणे च ताभ्यामेव न गन्धो गृह्यत इति गन्धग्रहणप्रयोजनं घ्राणमनुमीयते। त्रयाणां च ग्रहणे न तैरेव रसो गृह्यत इति रसग्रहणप्रयोजनं रसनमनुमीयते। न च चतुर्णां ग्रहणे तैरेव शब्दः श्रूयत इति शब्दग्रहणप्रयोजनं श्रोत्रमनुमीयते। एवमिन्द्रियप्रयोजनस्यानितरेतरसाधनसाध्यत्वात् पञ्चैवेन्द्रियाणि॥५५॥

[**वा** पृ: ३६८; **टी** पृ:४८९; **प** पृ:४५६]

**न, तदर्थबहुत्वात् ॥३।१।५६॥**

न स्वल्विन्द्रियार्थपञ्चत्वात् पञ्चेन्द्रियाणीति सिध्यति। कस्मात्? तेषामर्थानां बहुत्वात्। बहवः खल्विम इन्द्रियार्थाः, स्पर्शास्तावत् शीतोष्णानुष्णाशीता इति। रूपाणि शुक्लहरितादीनि। गन्धा इष्टानिष्टोपेक्षणीयाः। रसाः कटुकादयः । शब्दा वर्णात्मानो ध्वनिमात्राश्च भिन्नाः। तद् यस्येन्द्रियार्थपञ्चत्वात् पञ्चेन्द्रियाणि, तस्येन्द्रियार्थबहुत्वाद् बहूनीन्द्रियाणि प्रसज्यन्त इति॥५६॥

[**वा** पृः ३६८; **टी** पृ:४८९; **प** पृः ४५६]

## गन्धत्वाद्यव्यतिरेकाद्गन्धादीनामप्रतिषेधः ॥३।१।५७॥

गन्धत्वादिभिः स्वसामान्यैः कृतव्यवस्थानां गन्धादीनां यानि [१]गन्धादिग्रहणानि तान्यसमानसाधनसाध्यत्वाद् ग्राहकान्तराणि न प्रयोजयन्ति। अर्थसमूहोऽनुमानमुक्तो नार्थैकदेशः। अर्थैकदेशमात्रं चाश्रित्य विषयपञ्चत्वमात्रं भवान् प्रतिषेधति। तस्मादयुक्तोऽयं प्रतिषेध इति।

कथं पुनर्गन्धत्वादिभिः स्वसामान्यैः कृतव्यवस्था गन्धादय इति? स्पर्शः खल्वयं त्रिविधः शीत उष्णोऽनुष्णाशीतश्च स्पर्शत्वेन स्वसामान्येन संगृहीतः। गृह्यमाणे च शीतस्पर्शे नोष्णस्यानुष्णाशीतस्य वा स्पर्शस्य ग्रहणं ग्राहकान्तरं प्रयोजयति, स्पर्शभेदानामेकसाधनसाध्यत्वाद् येनैव शीतस्पर्शो गृह्यते, तेनैवेतरावपीति। एवं गन्धत्वेन गन्धानाम्, रूपत्वेन रूपाणाम्, रसत्वेन रसानाम्, शब्दत्वेन शब्दानामिति। गन्धादिग्रहणानि पुनरसमानसाधनसाध्यत्वाद् ग्राहकान्तराणां प्रयोजकानि। तस्माद् उपपन्नमिन्द्रियार्थपञ्चत्वात् पञ्चेन्द्रियाणीति॥५७॥

[**वा** पृः ३६९; **टी** पृः ४८९; **प** पृः ४५६]

यदि सामान्यं संग्राहकम्, प्राप्तमिन्द्रियाणाम्—

## विषयत्वाव्यतिरेकादेकत्वम् ॥३।१।५८॥

विषयत्वेन हि स्वसामान्येन गन्धादयः संगृहीता इति॥५८॥

---

१. गन्धादि° Om J

[**वा** पृ: ३६९; **टी** पृ: ४८९; **प** पृ:४५७]

## न, बुद्धिलक्षणाधिष्ठानगत्याकृतिजातिपञ्चत्वेभ्यः ॥३।१।५९॥

न खलु विषयत्वेन सामान्येन कृतव्यवस्था विषया ग्राहकान्तरनिरपेक्षा एकसाधनग्राह्या भवितुमर्हन्ति[१], अनुमीयन्ते तु पञ्च गन्धादयो गन्धत्वादिभिः स्वसामान्यैः कृतव्यवस्था इन्द्रियान्तरस्य ग्राह्याः। तस्मादसमर्थमेतत्। अयमेव चार्थोऽनूद्यते बुद्धिलक्षणपञ्चत्वादिति[२]। बुद्धय एव लक्षणानि विषयग्रहणलिङ्गत्वादिन्द्रियाणाम्। तदेतत्

**इन्द्रियार्थपञ्चत्वात् [ ३।१।५५ ]**

इत्येतस्मिन् सूत्रे कृतभाष्यमिति। तस्माद् बुद्धिलक्षणपञ्चत्वात् पञ्चेन्द्रियाणीति।

अधिष्ठानान्यपि खलु पञ्चेन्द्रियाणां सर्वशरीराधिष्ठानं स्पर्शनं स्पर्शग्रहणलिङ्गम्, कृष्णसाराधिष्ठानं चक्षुर्बहिर्निःसृतं रूपग्रहणलिङ्गम्, नासाधिष्ठानं घ्राणम्, जिह्वाधिष्ठानं रसनम्, कर्णच्छिद्राधिष्ठानं श्रोत्रम्, गन्धरसरूपस्पर्शशब्दग्रहणलिङ्गत्वादिति।

गतिभेदादपीन्द्रियभेदः। कृष्णसारोपनिबद्धं चक्षुर्बहिर्निःसृत्य रूपाधिकरणानि द्रव्याणि प्राप्नोति। स्पर्शनादीनि त्विन्द्रियाणि विषया एवाश्रयोपसर्पणात् प्रत्यासीदन्ति। सन्तानवृत्त्या तु शब्दस्य श्रोत्रे प्रत्यासत्तिरिति।

आकृतिः खलु परिमाणमियत्ता। सा पञ्चविधा। स्वस्थानमात्राणि घ्राणरसनस्पर्शनानि विषयग्रहणानुमेयानि। चक्षुः कृष्णसाराश्रयं बहिर्निःसृतं विषयव्यापि। श्रोत्रं खलु नान्यदाकाशात्, तच्च विभु, शब्दमात्रानुभवानुमेयम्, पुरुषसंस्कारोपग्रहाच्चाधिष्ठाननियमेन शब्दस्य व्यञ्जकमिति।

जातिरिति योनिं प्रचक्षते। पञ्च खल्विन्द्रिययोनयः पृथिव्यादीनि भूतानि। तस्मात् प्रकृतिपञ्चत्वादपि पञ्चेन्द्रियाणीति सिद्धम् ॥५९॥

---

१. अनुमीयन्ते for भ..न्ति TC　　२. ॰त्वादिभिः J

[**वा** पृ: ३७०; **टी** पृ:४८९; **प** पृ: ४५७]

कथं पुनर्ज्ञायते भूतप्रकृतीनीन्द्रियाणि, नाव्यक्तप्रकृतीनीति?

**भूतगुणविशेषोपलब्धेस्तादात्म्यम्॥३।१।६०॥**

दृष्टो हि वाय्वादीनां भूतानां गुणविशेषाभिव्यक्तिनियमः। वायुः स्पर्शव्यञ्जकः, आपो रसव्यञ्जिकाः, तेजो रूपव्यञ्जकम्, पार्थिवं किञ्चिद् द्रव्यं कस्यचिद् द्रव्यस्य[1] गन्धव्यञ्जकम्। अस्ति चायमिन्द्रियाणां भूतगुणविशेषोपलब्धिनियमः, तेन भूतगुणविशेषोपलब्धेर्मन्यामहे भूतप्रकृतीनीन्द्रियाणि, नाव्यक्तप्रकृतीनीति ॥६०॥

॥इन्द्रियनानात्वप्रकरणम्॥

## [ अर्थपरीक्षाप्रकरणम् ]

[**वा** पृ: ३७१; **टी** पृ: ४९०; **प** पृ: ४५७]

गन्धादयः पृथिव्यादिगुणा इत्युद्दिष्टम्। उद्देशश्च पृथिव्यादीनामेकगुणत्वे चानेकगुणत्वे च समान इत्यत आह—

**गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्याः॥३।१।६१॥**

[**वा** पृ: ३७१; **टी** पृ: ४९१; **प** पृ: ४५८]

**अप्तेजोवायूनां पूर्वं पूर्वमपोह्याकाशस्योत्तरः॥३।१।६२॥**

---

१. एवार्थस्य for द्रव्यस्य J

स्पर्शपर्यन्तानामिति विभक्तिविपरिणामः। आकाशस्योत्तरः शब्दः स्पर्शपर्यन्तेभ्य इति। कथं तर्हि तरब्निर्देशः? अतन्त्रम् विनियोगः सामर्थ्यात्[1]। तेनोत्तरशब्दस्य परार्थाभिधानं विज्ञायते उद्देशसूत्रे हि स्पर्शपर्यन्तेभ्यः परः शब्द इति। [2]तरब् वा स्पर्शस्य विवक्षितत्वात्। स्पर्शपर्यन्तेषु विनियुक्तेषु [3]योऽन्त्यस्तदुत्तरः शब्द इति॥६१-२॥

[**वा** पृः ३७१; **टी** पृः ४९१; **प** पृः ४५८]

**न, सर्वगुणानुपलब्धेः॥३।१।६३॥**

नायं गुणनियोगः साधुः। कस्मात्? यस्य भूतस्य यावन्तो गुणाः न ते तदात्मकेनेन्द्रियेण सर्वे उपलभ्यन्ते। पार्थिवेन हि घ्राणेन स्पर्शपर्यन्ता न गृह्यन्ते, गन्ध एवैको गृह्यते। एवं शेषेष्वपीति॥६३॥

[**वा** पृः ३७२; **टी** पृः ४९२; **प** पृः४५९]

कथं तर्हीमे गुणा विनियोक्तव्या इति?

**एकैकश्येनोत्तरोत्तरगुणसद्भावादुत्तरोत्तराणां तदनुपलब्धिः॥३।१।६४॥**

गन्धादीनामेकैको यथाक्रमं पृथिव्यादीनामेकैकस्य गुणः। अतः तदनुपलब्धिः तेषां तयोः तस्य चानुपलब्धिः। घ्राणेन रसरूपस्पर्शानां रसनेन रूपस्पर्शयोः चक्षुषा स्पर्शस्येति। कथं तर्हि अनेकगुणानि भूतानि गृह्यन्त इति?

---

१. द्रः न्यायालङ्कारः, पृः ५४५; स्वतन्त्रविनियोगसामर्थ्यात् C २. तन्त्रं for तरब् TC
३. योऽन्यस्तदु॰ C

संसर्गाच्चानेकगुणग्रहणम्। अबादिसंसर्गाच्च पृथिव्यां रसादयो गृह्यन्ते। एवं शेषेष्वपीति॥६४॥

[**वा** पृः ३७२; **टी** पृः ४९२; **प** पृः४५९]

नियमस्तर्हि न प्राप्नोति[१] संसर्गस्यानियमाच्चतुर्गुणा पृथिवी, त्रिगुणा आपः, द्विगुणं तेजः, एकगुणो वायुरिति। नियमश्चोपपद्यते। कथम्?

**विष्टं ह्यपरं परेण॥३।१।६५॥**

पृथिव्यादीनां पूर्वं पूर्वमुत्तरोत्तरेण विष्टम्। अतः संसर्गनियम इति। तच्चैतद् भूतसृष्टौ वेदितव्यम् नैतर्हीति॥६५॥

[**वा** पृः ३७२; **टी** पृः ४९२; **प** पृः ४५९]

**न, पार्थिवाप्ययोः प्रत्यक्षत्वात् ॥३।१।६६॥**

नेति त्रिसूत्रीं प्रत्याचष्टे। कस्मात्? पार्थिवस्य द्रव्यस्याप्यस्य च प्रत्यक्षत्वात्।

**महत्यनेकद्रव्य[ वत् ]त्वाद् रूपाच्चोपलब्धिः**

**[ वै. सू. ( च ) ४।१।६ ]**

इति तैजसमेव द्रव्यं प्रत्यक्षं स्यात् न पार्थिवमाप्यं वा रूपाभावात्। तैजसवत् पार्थिवाप्ययोर्द्रव्ययोः प्रत्यक्षत्वात् न संसर्गादनेकगुणग्रहणं भूतानामिति। भूतान्तररूपकृतं च पार्थिवाप्ययोः प्रत्यक्षत्वं ब्रुवतः प्रत्यक्षो वायुः प्रसज्यते, नियमे वा कारणमुच्यतामिति।

---

१. नोपपद्यते for न प्राप्नोति J

रसयोर्वा पार्थिवाप्ययोः प्रत्यक्षत्वात्। पार्थिवो रसः षड्विधः। प्रत्यक्ष एकविधः[१]। आप्यो मधुर एव। न चैतत्संसर्गाद् भवितुमर्हति। रूपयोर्वा पार्थिवाप्ययोः प्रत्यक्षत्वात् तैजसरूपानुगृहीतयोः, संसर्गे हि व्यञ्जकमेव रूपं न व्यङ्ग्यमस्तीति। एकानेकविधत्वेन वा पार्थिवाप्ययोः प्रत्यक्षत्वाद् रूपयोः। पार्थिवं हरितलोहितपीताद्यनेकविधं रूपम्। आप्यं तु शुक्लमप्रकाशात्मकम्। न चैतद् एकगुणानां संसर्गे सत्युपपद्यत इति। उदाहरणमात्रं चैतत्। अतः परं प्रपञ्चः॥

स्पर्शयोर्वा पार्थिवतैजसयोः प्रत्यक्षत्वात्। पार्थिवोऽनुष्णाशीतः स्पर्शः उष्णस्तैजसः प्रत्यक्षः न चैतदेकगुणानामनुष्णाशीतस्पर्शेन वायुना संसर्गे सत्युपपद्यत इति।

अथवा पार्थिवाप्ययोर्द्रव्ययोर्व्यवस्थितगुणयोः प्रत्यक्षत्वात् चतुर्गुणं पार्थिवं द्रव्यं त्रिगुणं चाप्यं द्रव्यं प्रत्यक्षम्। तेन तत्कारणमप्यनुमीयते तथागुणमिति।

**तस्य कार्यं लिङ्गम् [ वै. सू. ( च ) ४।१।२ ]**

**कारणभावाद्धि कार्यभावः [ वै. सू. ( च ) ४।१।३ ]**

इति। एवं तैजसवायव्ययोर्द्रव्ययोः[२] प्रत्यक्षत्वाद् गुणव्यवस्थायास्तत्कारणे द्रव्ये व्यवस्थानुमानमिति।

दृष्टश्च विवेकः पार्थिवाप्ययोः प्रत्यक्षत्वात्। पार्थिवं द्रव्यमबादिभिर्वियुक्तं प्रत्यक्षतो गृह्यते। आप्यं च पराभ्याम्। तैजसं च वायुना न चैतदेकैकगुणं गृह्यत इति। निरनुमानं तु

**विष्टं ह्यपरं परेण [ ३।१।६५ ]**

इत्येतदिति। नात्र लिङ्गमनुमापकं विद्यते येनैतदेवं प्रतिपद्येमहीति।

यच्चोक्तं

**विष्टं ह्यपरं परेण**

इति भूतसृष्टौ वेदितव्यं न साम्प्रतमिति नियमकारणाभावादयुक्तम्। दृष्टं च

१. प्र...धः। added J, vide also Alaṃkāra. २. तैजसाप्ययोर्द्र° J

साम्प्रतम् अपरं परेण विष्टमिति, वायुना च विष्टं तेज इति। विष्टत्वं संयोगः। स च द्वयोः समानः। वायुना च विष्टत्वात् स्पर्शवत् तेजो न तु तेजसा विष्टत्वाद् रूपवान् वायुरिति नियमकारणं नास्तीति। दृष्टं च तैजसेन स्पर्शेन वायव्यस्पर्श-स्याभिभवादग्रहणमिति। न च तेनैव तस्याभिभव इति॥६६॥

[**वा** पृः ३७३; **टी** पृः४९३; **प** पृः ४६०]

तदेवं न्यायविरुद्धं प्रवादं प्रतिषिध्य, न सर्वगुणानुपलब्धेरिति चोदितं समाधीयते—

## पूर्वं पूर्वं गुणोत्कर्षात् तत्तत्प्रधानम्॥३।१।६७॥

तस्मान्न सर्वगुणोपलब्धिः घ्राणादीनां पूर्वं पूर्वं गन्धादेर्गुणस्योत्कर्षात् तत्त-त्प्रधानम्। का प्रधानता? विषयग्राहकत्वम्। को गुणोत्कर्षः? अभिव्यक्तौ समर्थत्वम्? यथा बाह्यानां पार्थिवाप्यतैजसानां द्रव्याणां चतुर्गुणत्रिगुणद्विगुणानां न सर्वगुणव्यञ्जकत्वम्, गन्धरसरूपोत्कर्षात् तु यथाक्रमं गन्धरसरूपव्यञ्जकत्वम्, एवं घ्राणरसनचक्षुषां चतुर्गुणत्रिगुणद्विगुणानां न सर्वगुणग्राहकत्वम्, गन्धरसरूपो-त्कर्षात्तु यथाक्रमं गन्धरसरूपग्राहकत्वम्। तस्माद् घ्राणादिभिर्न सर्वेषां गुणा-नामुपलब्धिरिति।

यस्तु प्रतिजानीते गन्धगुणत्वाद् घ्राणं गन्धस्य ग्राहकमेवं रसनादीनीति[१], तस्य यथागुणयोगं घ्राणादिभिर्गुणग्रहणं प्रसज्यत इति॥६७॥

[**वा** पृः ३७३; **टी** पृः ४९४; **प** पृः४६०]

किंकृतं पुनर्व्यवस्थानं किञ्चित् पार्थिवं द्रव्यमिन्द्रियं न सर्वाणि, कानिचिदाप्यतैजसवायव्यानीन्द्रियाणि न सर्वाणीति?

---

१. रसनादिष्वपीति C

**तद्व्यवस्थानं तु भूयस्त्वात् ॥३।१।६८॥**

अर्थनिर्वृत्तिसमर्थस्य प्रविभक्तस्य द्रव्यस्य संसर्गः पुरुषसंस्कारकारितो भूयस्त्वम्। दृष्टो हि प्रकर्षे भूयस्त्वशब्दः। यथा प्रकृष्टो विषयो भूयानित्युच्यते। यथा पृथगर्थक्रियासमर्थानि पुरुषसंस्कारवशाद्[१] विषौषधिमणिप्रभृतीनि द्रव्याणि निर्वर्त्यन्ते, न सर्वं सर्वार्थम्, एवं पृथग्विषयग्रहणसमर्थानि घ्राणादीनि निर्वर्त्त्यन्ते, न सर्वविषयग्रहणसमर्थानीति॥६८॥

[**वा** पृः ३७४; **टी** पृः ४९४; **प** पृः ४६१]

स्वगुणान्नोपलभन्त इन्द्रियाणि। कस्मादिति चेत्?

**सगुणानामिन्द्रियभावात्॥३।१।६९॥**

स्वान् गन्धादीन् नोपलभन्ते घ्राणादीनि। केन कारणेनेति चेत्, स्वगुणैः सह घ्राणादीनामिन्द्रियभावात्। घ्राणं स्वेन गन्धेन समानार्थकारिणा सह बाह्यं गन्धं गृह्णाति, तस्य स्वगन्धग्रहणं सहकारिवैकल्यान्न भवति। एवं शेषाणामपि॥६९॥

[**वा** पृः३७४; **टी** पृः४९५; **प** पृः ४६१]

यदि पुनर्गन्धः सहकारी च स्याद् घ्राणस्य ग्राह्यश्चेति ततः को दोष इत्यत आह[२]—

**तेनैव तस्याग्रहणाच्च॥३।१।७०॥**

---

१. पुरु...द् Om J २. ग्राह्यश्चेत्यत आह for ग्राह्य...आह—TC

[1]स्वगुणानुपलब्धिरिन्द्रियाणाम्। यो हि ब्रवीति, यथा बाह्यं द्रव्यं चक्षुषा गृह्यते, तथा तेनैव चक्षुषा तदेव चक्षुर्गृह्यतामिति, तादृगिदम्। तुल्यो ह्युभयत्र प्रतिपत्तिहेत्वभाव इति ॥७०॥

[**वा** पृः ३७४; **टी** पृः ४९५; **प** पृः ४६१]

**न, शब्दगुणोपलब्धेः ॥३।१।७१॥**

स्वगुणान्नोपलभन्त इन्द्रियाणीत्येतन्न सम्भवति। उपलभ्यते हि स्वगुणः शब्दः श्रोत्रेणेति ॥७१॥

[**वा** पृः३७५; **टी** पृः ४९५; **प** पृः ४६१]

**तदुपलब्धिरितरेतरद्रव्यगुणवैधर्म्यात् ॥३।१।७२॥**

न शब्देन गुणेन सगुणमाकाशमिन्द्रियं भवति। न च शब्दः शब्दस्य व्यञ्जकः। न च घ्राणादीनां स्वगुणग्रहणं प्रत्यक्षम्, नाप्यनुमीयते। अनुमीयते तु श्रोत्रेणाकाशेन शब्दस्य ग्रहणम्। शब्दगुणत्वं चाकाशस्येति परिशेषतः[2]। परिशेषश्चानुमानं वेदितव्यम्। आत्मा तावत् श्रोता न करणम्। मनसः श्रोत्रत्वे बधिराभावः। पृथिव्यादीनां घ्राणादिभावे सामर्थ्यम्, श्रोत्रभावे चासामर्थ्यम्। अस्ति चेदं श्रोत्रम्, आकाशं च शिष्यते। परिशेषादाकाशं श्रोत्रमिति ॥७२॥

॥अर्थपरीक्षाप्रकरणम्॥

॥अवसितं सभाष्ये न्यायदर्शने तृतीयाध्यायस्य प्रथमाह्निकम्॥

---

१. न गुणोपलब्धिः for स्वगुणानुपलब्धिः C   २. परिशेषतः added J

# तृतीयाध्यायस्य द्वितीयाह्निकम्

## [ बुद्ध्यनित्यताप्रकरणम् ]

[**वा** पृः ३७६; **टी** पृः ४९६; **प** पृः ४६२]

परीक्षितानीन्द्रियाण्यर्थाश्च। बुद्धेरिदानीं परीक्षाक्रमः। सा किमनित्या नित्या वेति? कुतः संशयः?

**कर्माकाशसाधर्म्यात् संशयः ॥३ ।२ ।१ ॥**

अस्पर्शवत्त्वं ताभ्यां समानो धर्म उपलभ्यते बुद्धौ, विशेषश्च उपजनापायधर्मवत्त्वम्। विपर्ययश्च यथास्वमनित्यनित्ययोस्तस्यां बुद्धौ[1] नोपलभ्यते। तेन संशय इति ॥१ ॥

[**वा** पृः ३७६; **टी** पृः ४९७; **प** पृः ४६३]

अनुपपन्नरूपः खल्वयं संशयः। सर्वशरीरिणां हि प्रत्यात्मवेदनीया अनित्या बुद्धिः, सुखादिवत्। भवति च[2] संवित्तिरमुमर्थं ज्ञास्यामि, जानामि अज्ञासिषमिति। न चोपजनापायावन्तरेण त्रैकाल्यव्यक्तिः। ततश्च त्रैकाल्यव्यक्तेरनित्या बुद्धिरित्येतत् सिद्धम्। प्रमाणसिद्धं चेदम्। शास्त्रेऽप्युक्तम्,

**इन्द्रियार्थसन्निकर्षोत्पन्नम्** [ द्रः १ ।१ ।४ ],

**युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्** [ १ ।१ ।१५ ]

इत्येवमादि। तस्मात् संशयप्रक्रियानुपपत्तिरिति।

---

१. बुद्धौ Om J        २. अमुमर्थं J only

दृष्टिप्रवादोपालम्भार्थं तु प्रकरणम्। एवं हि प्रपश्यन्तः प्रवदन्ति **सांख्याः**— पुरुषस्यान्तःकरणभूता नित्या बुद्धिरिति। साधनं च प्रचक्षते—

**विषयप्रत्यभिज्ञानात्॥३।२।२॥**

किं पुनरिदं प्रत्यभिज्ञानम्? यं पूर्वमज्ञासिषमर्थं तमिमं जानामीति ज्ञानयोः समानेऽर्थे प्रतिसन्धिज्ञानं प्रत्यभिज्ञानम्। [1]एतच्चावस्थितायां बुद्धावुपपन्नम्। [2]नानाबुद्धिभेदेषूत्पन्नापवर्गिषु प्रत्यभिज्ञानानुपपत्तिः। नान्यदृष्टमन्यः प्रत्यभिजानातीति॥२॥

[**वा** पृः ३७७; **टी** पृः ४९७; **प** पृः ४६३]

**साध्यसमत्वादहेतुः ॥३।२।३॥**

यथा खलु नित्यत्वं बुद्धेः साध्यम्, एवं प्रत्यभिज्ञानमपीति। किं कारणम्? चेतनधर्मस्य करणेऽनुपपत्तेः। पुरुषधर्मः खल्वयं ज्ञानं दर्शनम् उपलब्धिर्बोधः प्रत्ययोऽध्यवसाय इति। चेतनो हि पूर्वज्ञातमर्थं प्रत्यभिजानाति, तस्यैतस्माद्धेतोर्नित्यत्वं युक्तमिति। करणचैतन्याभ्युपगमे तु चेतनस्वरूपं वचनीयम्। नानिर्दिष्टस्वरूपमात्मान्तरं शक्यमस्तीति प्रतिपत्तुम्। ज्ञानं चेद् बुद्धेरन्तःकरणस्येत्यभ्युपगम्यते, चेतनस्येदानीं किं स्वरूपम्, को धर्मः, किं तत्त्वम्? ज्ञानेन च बुद्धौ वर्तमानेनायं चेतनः किं करोतीति?

चेतयत इति चेत्? न, ज्ञानादर्थान्तरवचनम्। पुरुषश्चेतयते, बुद्धिर्जानीत इति नेदं ज्ञानादर्थान्तरमुच्यते। चेतयते जानीते बुध्यते पश्यति उपलभत इत्येकोऽय-

१. °ताया बुद्धेरुपपन्नम् TC २. नानात्वे तु बुद्धि° C

मर्थः। बुद्धिर्ज्ञापयतीति चेत्? अद्धा, जानीते पुरुषो बुद्धिर्ज्ञापयतीति। सत्यमेतत्। एवञ्चाभ्युपगमे ज्ञानं पुरुषस्येति सिद्धं भवति। न बुद्धेरन्तःकरणस्येति।

प्रतिपुरुषं च शब्दान्तरव्यवस्थाप्रतिज्ञाने प्रतिषेधहेतुवचनम्। यश्च प्रतिजानीते कश्चित् पुरुषश्चेतयते, कश्चिद् बुध्यते, कश्चिदुपलभते, कश्चित् पश्यतीति पुरुषान्तराणि खल्विमानि चेतनो बोद्धा उपलब्धा द्रष्टेति। नैकस्यैते धर्मा इत्यत्र कः प्रतिषेधहेतुरिति?

अर्थस्याभेद इति चेत्, समानम्। अभिन्नार्था एते शब्दा इति तत्र व्यवस्था-नुपपत्तिरित्येवं चेन्मन्यसे, समानं भवति। पुरुषश्चेतयते बुद्धिर्जानीत इत्यत्राप्यर्थो न भिद्यते। तत्रोभयोश्चेतनत्वादन्यतरलोप इति। यदि पुनर्बुध्यतेऽनयेति बोधनं बुद्धिः मन एवोच्यते, तच्च नित्यम् इति? अस्त्वेतदेवम्, न तु मनसो विषयप्रत्यभिज्ञानान्नित्यत्वम्। दृष्टं हि करणभेदेऽपि ज्ञातुरेकत्वात् प्रत्यभिज्ञानम्

**सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात् [ ३ ।१ ।७ ]**

इति चक्षुर्वत्। प्रदीपवच्च, प्रदीपान्तरदृष्टस्य प्रदीपान्तरेण प्रत्यभिज्ञानमिति। तस्माज् ज्ञातुरयं नित्यत्वे हेतुरिति ॥३ ॥

[**वा** पृः ३७९; **टी** पृः ४९८; **प** पृः ४६४]

यच्च मन्यते बुद्धेरवस्थिताया यथाविषयं वृत्तयो ज्ञानानि निश्चरन्ति, वृत्तिश्च वृत्तिमतो नान्येति, एतच्च—

**न, युगपदग्रहणात् ॥३ ।२ ।४ ॥**

वृत्तिवृत्तिमतोरनन्यत्वे वृत्तिमतोऽवस्थानाद् वृत्तीनामप्यवस्थानमिति यानीमानि विषयग्रहणानि तान्यवतिष्ठन्त इति युगपद् विषयाणां ग्रहणं प्रसज्यत इति ॥४ ॥

[**वा** पृ: ३८०; **टी** पृ: ४९८; **प** पृ: ४६४]

**अप्रत्यभिज्ञाने च विनाशप्रसङ्गः ॥३।२।५॥**

अतीते च प्रत्यभिज्ञाने वृत्तिमानप्यतीत इत्यन्तःकरणस्य विनाशः प्रसज्यते। विपर्यये च नानात्वमिति ॥५॥

[**वा** पृ: ३८०; **टी** पृ: ४९८; **प** पृ: ४६४]

अविभु चैकं मनः पर्यायेणेन्द्रियैः संयुज्यत इति—

**क्रमवृत्तित्वादयुगपद्ग्रहणम्॥३।२।६॥**

इन्द्रियार्थानाम्। वृत्तिवृत्तिमतोर्नानात्वादिति। एकत्वे च प्रादुर्भावतिरोभावयोरभाव इति॥६॥

[**वा** पृ: ३८०; **टी** पृ: ४९८; **प** पृ: ४६४]

**अप्रत्यभिज्ञानं च विषयान्तरव्यासङ्गात्॥३।२।७॥**

अप्रत्यभिज्ञानम् अनुपलब्धिः[१]। अनुपलब्धिश्च कस्यचिदर्थस्य विषयान्तरव्यासक्ते मनस्युपपद्यते, वृत्तिवृत्तिमतोर्नानात्वात्। एकत्वे हि अनर्थको व्यासङ्ग इति॥७॥

---

१. अनुपलब्धिः Om J

[**वा** पृ: ३८०; **टी** पृ: ४९९; **प** पृ: ४६४]

विभुत्वे चान्तःकरणस्य पर्यायेणेन्द्रियेण संयोगः—

**न, गत्यभावात्॥३।२।८॥**

प्राप्तानीन्द्रियाण्यन्तःकरणेनेति प्राप्त्यर्थस्य गमनस्याभावः। तत्र क्रमवृत्तित्वाभावादयुगपद्ग्रहणानुपपत्तिरिति।

गत्यभावाच्च प्रतिषिद्धं विभुनोऽन्तःकरणस्यायुगपद्ग्रहणं न लिङ्गान्तरेणानुमीयत इति। यथा चक्षुषो गतिः प्रतिषिद्धा सन्निकृष्टविप्रकृष्टयोस्तुल्यकालग्रहणात् पाणिचन्द्रमसोर्व्यवधानप्रतिघातेनानुमीयत इति। सोऽयं नान्तःकरणे विवादो न तस्य नित्यत्वे। सिद्धं ह्यतो मनोऽन्तःकरणं नित्यं चेति। क्व तर्हि विवादः? तस्य विभुत्वे। तच्च प्रमाणतोऽनुपलब्धेः प्रतिषिद्धं प्रागिति। एकं चान्तःकरणं नाना चेमा ज्ञानात्मिका वृत्तयः, चक्षुर्विज्ञानं घ्राणविज्ञानं रूपविज्ञानं गन्धविज्ञानमिति। एतच्च वृत्तिवृत्तिमतोरेकत्वेऽनुपपन्नमिति। पुरुषो जानीते, नान्तःकरणमिति। एतेन विषयान्तरव्यासङ्गः प्रत्युक्तः। विषयान्तरग्रहणलक्षणो विषयान्तरव्यासङ्गः पुरुषस्य, नान्तःकरणस्येति। [१]केनचिदिन्द्रियेण सन्निधिः केनचिदसन्निधिरित्ययं तु व्यासङ्गोऽनुज्ञायते मनस इति॥८॥

[**वा** पृ: ३८१; **टी** पृ: ५००; **प** पृ: ४६५]

एकमन्तःकरणं नाना वृत्तय इति। सत्यभेदे वृत्तेरिदमुच्यते—

**स्फटिकान्यत्वाभिमानवत्तदन्यत्वाभिमानः॥३।२।९॥**

---

१. क्वचिदिन्द्रियसन्निधिः क्वचिदिन्द्रियासन्निधिः J

तस्यां वृत्तौ नानात्वाभिमानः, यथा द्रव्यान्तरोपहिते स्फटिकेऽन्यत्वाभिमानो नीलो लोहित इति, एवं विषयान्तरोपधानादिति॥

न हेत्वभावात्। स्फटिकान्यत्वाभिमानवदयं ज्ञानेषु नानात्वाभिमानो गौणो न पुनर्गन्धाद्यन्यत्वाभिमानवदिति हेतुर्नास्ति। हेत्वभावादयुक्तमिति[1]। समानो हेत्वभाव इति चेत्—न, ज्ञानानां क्रमेणोपजनापायदर्शनात्[2]। क्रमेण हीन्द्रियार्थेषु ज्ञानान्युपजायन्ते चापयन्ति चेति दृश्यते। तस्माद् गन्धाद्यन्यत्वाभिमानवदयं ज्ञानेषु नानात्वाभिमान इति॥९॥

॥बुद्ध्यनित्यताप्रकरणम्॥

## [ क्षणभङ्गप्रकरणम् ]

[**वा** पृ: ३८३; **टी** पृ: ५०२; **प** पृ: ४६६]

स्फटिकान्यत्वाभिमानवदित्येतदमृष्यमाणः[3] क्षणिकवाद्याह—

**स्फटिकेऽप्यपरापरोत्पत्तेः क्षणिकत्वाद् व्यक्तीनामहेतुः॥३।२।१०॥**

स्फटिकस्याभेदेनावस्थितस्योपधानभेदान्नानात्वाभिमान इत्ययमविद्यमान-हेतुकः पक्षः। कस्मात्? स्फटिकेऽप्यपरापरोत्पत्तेः स्फटिकेऽप्यन्या व्यक्तय उत्पद्यन्तेऽन्या निरुध्यन्त इति। कथम्? क्षणिकत्वाद् व्यक्तीनाम्। क्षणश्चाल्पीयान् कालः। क्षणस्थितिकाः क्षणिकाः। कथं पुनर्गम्यते क्षणिका व्यक्तय इति? उपचयापचयप्रबन्धदर्शनाच्छरीरादिषु। पक्तिनिर्वृत्तस्याहाररसस्य शरीरे रुधिरादि-

---

१. हेत्वभावादनुपपन्न इति C २. उपचयापचय for उपजनापाय J ३. °तदन्यत्वाभिमान इत्येतदमृष्य° J

भावेनोपचयोऽपचयश्च प्रबन्धेन प्रवर्तते। उपचयाद् व्यक्तीनामुत्पादः। अपचयाद् व्यक्तिनिरोधः। एवं च सति [१]अवयवपरिमाणभेदेन वृद्धिः शरीरस्य कालान्तरे गृह्यत इति। सोऽयं [२]व्यक्तिविशेषधर्मो व्यक्तिमात्रे वेदितव्य इति॥१०॥

[**वा** पृ: ३८४; **टी** पृ: ५०२; **प** पृ: ४६७]

**नियमहेत्वभावाद् यथादर्शनमभ्यनुज्ञा॥३।२।११॥**

सर्वासु व्यक्तिषु उपचयापचयप्रबन्धः शरीरवदिति नायं नियमः। कस्मात्? हेत्वभावात्। नात्र प्रत्यक्षमनुमानं वा प्रतिपादकमस्तीति। तस्माद् यथादर्शनमभ्यनुज्ञा। यत्र यत्रोपचयापचयप्रबन्धो गृह्यते, तत्र तत्र व्यक्तीनामपरापरोत्पत्तिरुपचयापचयप्रबन्धदर्शनेनाभ्यनुज्ञायते, यथा शरीरादिषु। यत्र यत्र न दृश्यते, तत्र तत्र प्रत्याख्यायते, यथा ग्रावप्रभृतिषु। स्फटिके चोपचयापचयप्रबन्धो न दृश्यते, तस्मादयुक्तं स्फटिकेऽप्यपरापरोत्पत्तिरिति। यथा चार्कस्य कटुकिम्ना सर्वद्रव्याणां कटुकिमानं प्रतिपादयेत् तादृगेतदिति॥११॥

[**वा** पृ: ३८५; **टी** पृ: ५०३; **प** पृ: ४६७]

यश्चाशेषनिरोधेनापूर्वोत्पादं निरन्वयं द्रव्यसन्ताने क्षणिकतां मन्यते, तस्यैतत्—

**नोत्पत्तिविनाशकारणोपलब्धेः॥३।२।१२॥**

उत्पत्तिकारणं तावदुपलभ्यते यथा अवयवोपचयो वल्मीकादीनाम्। विनाशकारणं चोपलभ्यते [३]कुम्भादीनामवयवविभागः। यस्य त्वनपचितावयवं

१. परिणाम C	२. पदार्थधर्मो for व्यक्तिविशेषधर्मा J	३. घटादीनां C

निरुध्यते, अनुपचितावयवं चोत्पद्यते, तस्याशेषनिरोधे निरन्वये वापूर्वोत्पादे न कारणमुभयत्राप्युपलभ्यत इति ॥१२॥

[**वा** पृः ३८६; **टी** पृः ५०४; **प** पृः ४६८]

**क्षीरविनाशे कारणानुपलब्धिवद्दध्युत्पत्तिवच्च तदुपपत्तिः ॥३।२।१३॥**

यथानुपलभ्यमानं क्षीरविनाशकारणं दध्युत्पत्तिकारणं चाभ्यनुज्ञायते तथा स्फटिकेऽपि परापरासु व्यक्तिषु विनाशकारणं चोत्पत्तिकारणं चाभ्यनुज्ञेयमिति ॥१३॥

[**वा** पृः ३८७; **टी** पृः ५०४; **प** पृः ४६८]

**लिङ्गतो ग्रहणान्नानुपलब्धिः ॥३।२।१४॥**

क्षीरविनाशलिङ्गं क्षीरविनाशकारणं दध्युत्पत्तिलिङ्गं च दध्युत्पत्तिकारणं गृह्यते। तस्मात् नानुपलब्धिः, विपर्ययस्तु स्फटिकादिषु द्रव्येषु। [१]अपरापरोत्पत्तौ व्यक्तीनां न लिङ्गमस्तीत्यनुत्पत्तिरेवेति ॥१४॥

[**वा** पृः ३९३; **टी** पृः ५२०; **प** पृः ४७७]

अत्र हि कश्चित् परिहारमाह—

**न पयसः परिणामगुणान्तरप्रादुर्भावात् ॥३।२।१५॥**

---

१. अपरा ... रेवेति। Om J

पयसः परिणामो न विनाश इत्येक आह। [१]परिणामश्चावस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिरिति। गुणान्तरप्रादुर्भाव इत्यपर आह। स च सतो द्रव्यस्य पूर्वगुणनिवृत्तौ गुणान्तरमुत्पद्यत इति। स खल्वेकपक्षीभाव इवायम् ॥१५॥

[**वा** पृः ३९४; **टी** पृः ५२१; **प** पृः ४७७]

अत्र तु प्रतिषेधः—

**व्यूहान्तराद्द्रव्यान्तरोत्पत्तिदर्शनं पूर्वद्रव्यनिवृत्तेरनुमानम् ॥३।२।१६॥**

[२]संमूर्छनालक्षणादवयवव्यूहाद् द्रव्यान्तरे दध्नि उत्पन्ने गृह्यमाणे पूर्वं पयोद्रव्यमवयवविभागेभ्यो [३]विनष्टमित्यनुमीयते, यथा मृदवयवानां व्यूहान्तराद् द्रव्यान्तरे स्थाल्यामुत्पन्नायां पूर्वं मृत्पिण्डद्रव्यं मृदवयवविभागेभ्यो निवर्तत इति। मृद्वच्चावयवान्वयः पयोदध्नोर्नाशेषनिरोधे निरन्वयो द्रव्यान्तरोत्पादो घटत इति[४] ॥१६॥

[**वा** पृः ३९४; **टी** पृः ५२१; **प** पृः ४७७]

अभ्यनुज्ञाय च निष्कारणं क्षीरविनाशं [५]दध्युत्पादं च प्रतिषेध उच्यते—

**क्वचिद् विनाशकारणानुपलब्धेः क्वचिच्चोपलब्धेरनेकान्तः ॥३।२।१७॥**

१. व्यासभाष्यम् ३.१५ २. द्रव्यजनकानामवयवानां संयोगः संमूर्छना note in J margin ३. निवृत्तम् for विनष्टम् TC ४. उत्पाद इति J ५. निष्कारणं दध्युत्पादं J

क्षीरदधिवन्निष्कारणौ विनाशोत्पादौ स्फटिकव्यक्तीनामिति नायमेकान्त इति। कस्मात्? हेत्वभावात्। नात्र हेतुरस्ति। अकारणौ विनाशोत्पादौ स्फटिकादिव्यक्तीनां क्षीरदधिवत्। न पुनर्यथा विनाशकारणभावात् कुम्भस्य विनाशः, उत्पत्तिकारण-भावाच्च उत्पत्तिरेवं स्फटिकादिव्यक्तीनां विनाशोत्पत्तिकारणभावाद् विनाशो-त्पत्तिभाव इति।

निरधिष्ठानं च दृष्टान्तवचनम्। गृह्यमाणयोर्विनाशोत्पादयोः स्फटिकादिषु स्यादयमाश्रयवान् दृष्टान्तः क्षीरविनाशकारणानुपलब्धिवद्दध्युत्पत्तिवच्चेति[1]। तौ तु न गृह्येते। तस्मात् निरधिष्ठानोऽयं दृष्टान्त इति।

अभ्यनुज्ञाय च स्फटिकस्योत्पादविनाशौ योऽत्र साधकस्तस्याभ्यनु-ज्ञानादप्रतिषेधः कुम्भवन्न निष्कारणौ विनाशोत्पादौ [2]स्फटिकादीनामित्यभ्यनुज्ञेयोऽयं दृष्टान्तः, [3]प्रतिषेद्धुमशक्यत्वात्। क्षीरदधिवच्च निष्कारणौ विनाशोत्पादाविति शक्योऽयं प्रतिषेद्धुं कारणतो विनाशोत्पत्तिदर्शनात्। क्षीरदध्नोर्विनाशोत्पत्ती पश्यता तत्कारणमनुमेयं कार्यलिङ्गं हि कारणमिति॥१७॥

॥क्षणभङ्गप्रकरणम्॥

## [ बुद्धेरात्मगुणत्वप्रकरणम् ]

[**वा** पृः ३९५; **टी** पृः ५२२; **प** पृः ४७८]

उपपन्नमनित्या बुद्धिरिति। इदं तु चिन्त्यते कस्येयं बुद्धिरात्मेन्द्रियमनोऽर्थानां गुण इति। प्रसिद्धोऽपि खल्वयमर्थः परीक्षाशेषं प्रवर्तयामीति प्रक्रियते। सोऽयं बुद्धौ सन्निकर्षोत्पत्तेः संशयः विशेषस्याग्रहणादिति। तत्रायं विशेषः

**नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात्॥३।२।१८॥**

---

१. ०दध्युत्पत्तिकारणानुपलब्धिवच्चेति। T

२. स्फटिकादीनाम् Om J

३. तत्प्रतिषेधस्याशक्यत्वात् J

नेन्द्रियाणामर्थानां वा गुणो ज्ञानं तेषां विनाशेऽपि तस्यावस्थानात्[१]। भवति खल्विदमिन्द्रियेऽर्थे च विनष्टे ज्ञानमद्राक्षमिति। न च ज्ञातरि विनष्टे ज्ञानं भवितुमर्हतीति। अन्यत् खलु वै तदिन्द्रियार्थसन्निकर्षजं ज्ञानं यदिन्द्रियार्थविनाशे न भवति। इदमन्यदात्ममनःसन्निकर्षजम्, तस्य युक्तो भाव इति। [२]स्मृतिः खल्वियमद्राक्षमिति पूर्वदृष्टविषया। न च ज्ञातरि नष्टे पूर्वोपलब्धार्थस्य स्मरणं युक्तम्। न चान्यदृष्टमन्योः स्मरति। न च मनसि ज्ञातर्यभ्युपगम्यमाने शक्यमिन्द्रियार्थयोर्ज्ञातृत्वं प्रतिपादयितुमिति ॥१८॥

[**वा** पृ: ३९६; **टी** पृ:५२३; **प** पृ: ४७८]

अस्तु तर्हि मनोगुणो ज्ञानम्—

**युगपज्ज्ञेयानुपलब्धेश्च न मनसः ॥३।२।१९॥**

[३]युगपज्ज्ञेयानुपलब्धिरन्तःकरणस्य लिङ्गम्। तत्र युगपज्ज्ञेयानुपलब्ध्या यदनुमीयतेऽन्तःकरणम्, न तस्य गुणो ज्ञानम्। कस्य तर्हि? ज्ञस्य वशित्वात्। वशी ज्ञाता वश्यं करणम्। ज्ञानगुणत्वे च करणभावनिवृत्तिः घ्राणादिसाधनस्य च ज्ञातुर्गन्धादिज्ञानभावादनुमीयतेऽन्तःकरणसाधनस्य सुखादिज्ञानं स्मृतिश्चेति। तत्र यत् तज्ज्ञानगुणं मनः स आत्मा, यत्तु सुखाद्युपलब्धिसाधनमन्तःकरणं [४]मनस्तदिति संज्ञाभेदमात्रं नार्थभेद इति।

युगपज्ज्ञेयोपलब्धेश्च योगिन इति वा चार्थः। योगी खलु ऋद्धौ प्रादुर्भूतायां विकरणधर्मा निर्माय सेन्द्रियाणि शरीरान्तराणि तेषु युगपज्ज्ञेयान्युपलभते। तच्चैतद् विभौ ज्ञातर्युपपद्यते, नाणौ मनसीति। विभुत्वे वा मनसो ज्ञानस्य नात्मगुणत्वप्रति-

---

१. ज्ञानस्य भावात् for तस्यावस्थानात् C २. उत्तरम् J margin ३. ज्ञानानुत्पत्तिः for ज्ञेयानुपलब्धिः J ४. न तज्ज्ञानगुणं added J

षेधः। विभु च मनस्तदन्तःकरणभूतं चेति तस्य सर्वेन्द्रियैर्युगपत् संयोगाद् युगपज्ज्ञानान्युत्पद्येरन्निति ॥१९ ॥

[**वा** पृः ३९७; **टी** पृः ५२४; **प** पृः ४७९]

**तदात्मगुणत्वेऽपि तुल्यम् ॥३ ।२ ।२० ॥**

विभुरात्मा सर्वेन्द्रियैः संयुक्त इति युगपज्ज्ञानोत्पत्तिप्रसङ्ग इति ॥२० ॥

[**वा** पृः ३९७; **टी** पृः ५२४; **प** पृः ४७९]

**इन्द्रियैर्मनसः सन्निकर्षाभावात् तदनुत्पत्तिः ॥३ ।२ ।२१ ॥**

गन्धाद्युपलब्धेरिन्द्रियार्थसन्निकर्षवदिन्द्रियमनःसन्निकर्षोऽपि कारणम्, तस्य चायौगपद्यमणुत्वान्मनसः। अयौगपद्यादनुत्पत्तिर्युगपज् ज्ञानानामात्मगुणत्वेऽपीति ॥२१ ॥

[**वा** पृः ३९७; **टी** पृः ५२४; **प** पृः ४७९]

यदि पुनरात्मेन्द्रियार्थसन्निकर्षमात्रादेव गन्धादिज्ञानमुत्पद्येत—

**नोत्पत्तिकारणानपदेशात् ॥३ ।२ ।२२ ॥**

आत्मेन्द्रियसन्निकर्षमात्राद् गन्धादिज्ञानमुत्पद्यत इति [१]नात्रोत्पत्तिकारणमपदिश्यते येनैतदेवं प्रतिपद्येमहीति ॥२२ ॥

---

१. उत्पत्ति Om J

[**वा** पृ: ३९८; **टी** पृ: ५२५; **प** पृ: ४७९]

**विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः ॥३।२।२३॥**

**तदात्मगुणत्वेऽपि तुल्यम्** [ ३।२।२० ]
इत्येतदनेन समुच्चीयते। द्विविधो हि गुणनाशहेतुः, गुणानामाश्रयाभावो विरोधी च गुणः। नित्यत्वादात्मनोऽनुपपन्नः पूर्वः, विरोधी च बुद्धेर्गुणो न गृह्यते। तस्मादात्मगुणत्वे सति बुद्धेर्नित्यत्वप्रसङ्गः॥२३॥

[**वा** पृ: ३९८; **टी** पृ: ५२५; **प** पृ: ४८०]

**अनित्यत्वग्रहणाद्बुद्धेर्बुद्ध्यन्तराद् विनाशः शब्दवत्॥३।२।२४॥**

अनित्या बुद्धिरिति सर्वशरीरिणां प्रत्यात्मवेदनीयमेतत्। गृह्यते च बुद्धिसन्तानः। तत्र बुद्धेर्बुद्ध्यन्तरं विरोधी गुण इत्यनुमीयते, यथा शब्दसन्ताने शब्दः शब्दान्तरविरोधीति॥२४॥

[**वा** पृ:३९९; **टी** पृ: ५२५; **प** पृ: ४८०]

असंख्येयेषु ज्ञानकारितेषु संस्कारेषु स्मृतिहेतुषु आत्मसमवेतेषु [१]सत्स्वात्ममनसोश्च सन्निकर्षे समाने स्मृतिहेतौ सति न कारणस्यायौगपद्यमस्तीति युगपत्

---

१. सत्सु Om C

स्मृतयः प्रादुर्भवेयुः यदि बुद्धिरात्मगुणः स्यादिति। अत्र **कश्चित्** सन्निकर्षस्यायौगपद्यमुपपादयिष्यन्नाह—

**ज्ञानसमवेतात्मप्रदेशसन्निकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः॥३।२।२५॥**

ज्ञानसाधनः संस्कारो ज्ञानमित्युच्यते। ज्ञानसंस्कृतैरात्मप्रदेशैः सह पर्यायेण मनः सन्निकृष्यते। आत्ममनःसन्निकर्षात् स्मृतयोऽपि पर्यायेण भवन्तीति॥२५॥

[**वा** पृः ३९९; **टी** पृः ५२६; **प** पृः ४८०]

**नान्तःशरीरवृत्तित्वान्मनसः॥३।२।२६॥**

सदेहस्यात्मनो मनसा संयोगो विपच्यमानकर्माशयसहितो जीवनमिष्यते। तत्रास्य प्राक् प्रायणादन्तःशरीरे वर्तमानस्य मनसः शरीराद् बहिर्ज्ञानसंस्कृतैरात्मप्रदेशैः संयोगो नोपपद्यत इति॥२६॥

[**वा** पृः ४००; **टी** पृः ५२६; **प** पृः ४८०]

**साध्यत्वादहेतुः॥३।२।२७॥**

विपच्यमानकर्माशयमात्रं जीवनम्। एवं च सति साध्यमन्तःशरीरवृत्तित्वं मनस इति॥२७॥

[**वा** पृ: ४००; **टी** पृ: ५२६; **प** पृ: ४८०]

**स्मरतः शरीरधारणोपपत्तेरप्रतिषेधः॥३।२।२८॥**

सुस्मूर्षया खल्वयं मनः प्रणिदधानश्चिरादपि कञ्चिदर्थं स्मरति। स्मरतश्च शरीरधारणं दृश्यते। आत्ममनःसन्निकर्षजश्च प्रयत्नो द्विविधः—धारकः प्रेरकश्च। निःसृते च शरीराद् बहिर्मनसि धारकस्य प्रयत्नस्याभावाद् गुरुत्वात् पतनं स्यात् शरीरस्य स्मरत इति॥२८॥

[**वा** पृ: ४००; **टी** पृ: ५२६; **प** पृ: ४८०]

**न, तदाशुगतित्वान्मनसः॥३।२।२९॥**

आशुगति मनः। तस्य बहिःशरीरादात्मप्रदेशेन ज्ञानसंस्कृतेन सन्निकर्षः, प्रत्यागतस्य च प्रयत्नोत्पादनम् उभयं युज्यत इति। उत्पाद्य वा धारकं प्रयत्नं शरीरान्निःसरणं मनसः। [१]अतस्तत्रोपपन्नं धारणमिति॥२९॥

[**वा** पृ: ४००; **टी** पृ: ५२६; **प** पृ: ४८१]

**न, स्मरणकालानियमात्॥३।२।३०॥**

किञ्चिद्धि क्षिप्रं स्मर्यते किञ्चिच्चिरेण। यदा चिरेण, तदा सुस्मूर्षया मनसि धार्यमाणे चिन्ताप्रबन्धे सति [२]कस्यचिदेवार्थस्य [३]स्मर्तव्यार्थलिङ्गभूतस्य

---

१. अतः Om J    २. एव Om TC    ३. स्मर्तव्यार्थ Om TC

चिन्तनमाराधितं स्मृतिहेतुर्भवति। तच्चैतच्चिरनिश्चरिते मनसि नोपपद्यत इति।

शरीरसंयोगानपेक्षश्चात्ममन:संयोगो न स्मृतिहेतुः, शरीरस्योपभोगायतनत्वात्। उपभोगायतनं पुरुषस्य ज्ञातुः शरीरं न ततो निश्चरितस्य मनस आत्मना संयोगमात्रं ज्ञानसुखादीनामुत्पत्तौ कल्पते, क्लृप्तौ वा शरीरवैयर्थ्यमिति॥३०॥

[**वा** पृः ४०१; **टी** पृः ५२७; **प** पृः ४८१]

**आत्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगविशेषः॥३।२।३१॥**

आत्मप्रेरणेन वा मनसो बहिः शरीरात् संयोगविशेषः स्यात्, यदृच्छया वा, आकस्मिकोऽज्ञतया ज्ञतया वा मनसः? सर्वथा चानुपपत्तिः। कथम्? स्मर्तव्यत्वात्, इच्छातः [१]स्मरणाज्ज्ञानासम्भवाच्च। यदि तावदात्मा अमुष्यार्थस्य स्मृतिहेतुः संस्कारः अमुष्मिन्नात्मप्रदेशे समवेतः, तेन मनः संयुज्यतामिति मनः प्रेरयति तदा स्मृत एवासावर्थो भवति न स्मर्तव्यः। न चात्मप्रत्यक्ष आत्मप्रदेशः संस्कारो वा, तत्रानुपपन्नात्मप्रत्यक्षेण संवित्तिरिति। सुस्मूर्षया चायं मनः प्रणिदधानश्चिरादपि कञ्चिदर्थं स्मरति नाकस्मात्, ज्ञातृत्वं च मनसो नास्ति ज्ञानप्रतिषेधादिति॥३१॥

[**वा** पृः ४०१; **टी** पृः ५२७; **प** पृः ४८१]

तच्चैतत्—

**व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानम्॥३।२।३२॥**

१. स्मरणज्ञानासम्भवात् J, Alaṃkāra

यदा खल्वयं व्यासक्तमनाः क्वचिद् दृश्येऽर्थे शर्करया, कण्टकेन वा पादव्यथनमाप्नोति, तदा आत्ममनःसंयोगविशेष एषितव्यः। दृष्टं हि दुःखं दुःखसंवेदनं चेति। तत्र चायं समानः प्रतिषेधः। यदृच्छायां तु न विशेषो नाकस्मिकी क्रिया नाकस्मिकः संयोग इति।

कर्मादृष्टमुपभोगार्थं क्रियाहेतुरिति चेत्, समानम्। कर्मादृष्टं पुरुषस्थं पुरुषोपभोगार्थं मनसि क्रियाहेतुः, एवं दुःखं दुःखसंवेदनं च सिध्यतीत्येवं चेन्मन्यसे, समानम्। स्मृतिहेतावपि संयोगविशेषो भवितुमर्हति। तत्र यदुक्तम्

**आत्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगविशेषः [ ३।२।३१ ]**

इत्ययमप्रतिषेध इति। पूर्व एव तु प्रतिषेधो

**नान्तःशरीरवृत्तित्वान्मनसः [ ३।२।२६ ]**

इति॥३२॥

[**वा** पृः ४०१; **टी** पृः ५२७; **प** पृः ४८१]

कः खल्विदानीं कारणयौगपद्यस्य सम्भवाद् युगपदस्मरणस्य हेतुरिति?

**प्रणिधानलिङ्गादिज्ञानानामयुगपद्भावाद् युगपदस्मरणम्॥३।२।३३॥**

यथा खल्वात्ममनसोः सन्निकर्षः संस्कारश्च स्मृतिहेतुरेवं प्रणिधानलिङ्गादिज्ञानानि, तानि च न युगपद् भवन्ति, तत्कृता स्मृतीनां युगपदनुत्पत्तिरिति। प्रातिभवत्तु प्रणिधानाद्यनपेक्षे स्मार्ते यौगपद्यप्रसङ्गः। यत् खल्विदं प्रातिभमिव ज्ञानं प्रणिधानाद्यनपेक्षं स्मार्तमुत्पद्यते, कदाचित् तस्य युगपदुत्पत्तिप्रसङ्गो हेत्वभावात्। [१]न, सतः स्मृतिहेतोरसंवेदनात् प्रातिभेन समानाभिमानः। बह्वर्थविषये वै चिन्ताप्रबन्धे

---

१. न J only

कश्चिदेवार्थः कस्यचित् स्मृतिहेतुः। तस्यानुचिन्तनात् तस्य स्मृतिर्भवति। न चायं स्मर्ता सर्वं स्मृतिहेतुं संवेदयते, एवं मे स्मृतिरुत्पन्नेति। असंवेदनात् प्रातिभमिव ज्ञानमिदं स्मार्तमित्यभिमन्यते, न त्वस्ति प्रणिधानाद्यनपेक्षं स्मार्तमिति।

प्रातिभे तु कथमिति चेत्? पुरुषकर्मविशेषादुपभोगवन्नियमः। प्रातिभमिदानीं ज्ञानं युगपत् कस्मान्नोत्पद्यत इति? यथोपभोगार्थं कर्म युगपदुपभोगं न करोति, एवं पुरुषकर्मविशेषः प्रतिभाहेतुर्न युगपदनेकं प्रातिभं ज्ञानमुत्पादयतीति।

हेत्वभावादयुक्तमिति चेत्? न, करणस्य प्रत्ययपर्याये सामर्थ्यात्। उपभोगवन्नियम इत्यस्ति दृष्टान्तो हेतुस्तु नास्तीति एवं चेन्मन्यसे? न, करणस्य प्रत्ययपर्याये सामर्थ्यात्, नैकस्मिन् ज्ञेये युगपदनेकं ज्ञानमुत्पद्यते, न चानेकस्मिन्। तदिदं दृष्टेन प्रत्ययपर्यायेणानुमेयं करणस्य सामर्थ्यमित्थम्भूतमिति न ज्ञातुर्विकरण-धर्मणो देहनानात्वे प्रत्यययौगपद्यादिति।

अयं च द्वितीयः प्रतिषेधः, अवस्थितशरीरस्य चानेकज्ञानसमवायादेकप्रदेशे युगपदनेकार्थस्मरणं स्यात्। क्वचिदेवावस्थितशरीरस्य ज्ञातुरिन्द्रियार्थप्रबन्धेन ज्ञानमनेकमेकस्मिन्नात्मप्रदेशे समवैति। तेन च यदा मनः संयुज्यते तदा [१]ज्ञातपूर्वस्यानेकार्थस्य युगपत् स्मरणं प्रसज्यते प्रदेशसंयोगपर्यायाभावादिति। आत्मप्रदेशानामद्रव्यान्तरत्वादेकार्थसमवायस्याविशेषे सति[२] स्मृतियौगपद्यस्य प्रतिषेधानुपपत्तिः।

शब्दसन्ताने तु श्रोत्राधिष्ठानप्रत्यासत्त्या शब्दश्रवणवत् संस्कारप्रत्यासत्त्या मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिप्रसङ्गः[३]। पूर्व एव तु प्रतिषेधो नानेकज्ञानसमवाया-देकप्रदेशे युगपत्स्मृतिप्रसङ्ग इति॥३३॥

---

१. अनेकस्य for अनेकार्थस्य C    २. सति Om J and C var    ३. उत्पत्तिः for उत्पत्तिप्रसङ्गः J

[**वा** पृः ४०२; **टी** पृः ५२९; **प** पृः ४८२]

पुरुषधर्मो ज्ञानमन्तःकरणस्य त्विच्छाद्वेषप्रयत्नसुखदुःखानि धर्मा इति कस्यचिद् दर्शनम्। तत् प्रतिषिध्यते—

**ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः ॥३।२।३४॥**

अयं खलु जानीते तावदिदं मे सुखसाधनमिदं मे दुःखसाधनमिति, ज्ञात्वा स्वस्य सुखसाधनमाप्तुमिच्छति, दुःखसाधनं च हातुम्[१]। [२]प्राप्तीच्छाप्रयुक्तस्यास्य च सुखसाधनावाप्तये समीहाविशेष आरम्भः, जिहासाप्रयुक्तस्य च दुःखसाधन-परिवर्जनं निवृत्तिः। एवं ज्ञानेच्छाप्रयत्नद्वेषसुखदुःखानामेकैकशोऽभिसम्बन्धः, एककर्तृकत्वं ज्ञानेन चेच्छादीनां समानाश्रयत्वं च। तस्माज् ज्ञस्येच्छाद्वेषप्रयत्नसुख-दुःखानि धर्मा नाचेतनस्येति। आरम्भनिवृत्त्योश्च प्रत्यगात्मनि दृष्टत्वात् परत्रानुमानं वेदितव्यमिति ॥३४॥

[**वा** पृः ४०३; **टी** पृः ५२९; **प** पृः ४८३]

अत्र **भूतचैतनिक** आह—

**तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः ॥३।२।३५॥**

आरम्भनिवृत्तिलिङ्गाविच्छाद्वेषाविति यस्यारम्भनिवृत्ती तस्येच्छाद्वेषौ, यस्येच्छाद्वेषौ[३] तस्य ज्ञानमिति प्राप्तम्। पार्थिवाप्यतैजसवायवीयानां शरीराणामारम्भनिवृत्तिदर्शनादिच्छाद्वेषज्ञानैर्योग इति चैतन्यम् ॥३५॥

---

१. हातुमिच्छति C　२. ईप्सा for प्राप्तीच्छा J　३. यस्य ....षौ J only

[**वा** पृ: ४०३; **टी** पृ: ५३०; **प** पृ: ४८३]

## परश्वादिष्वारम्भनिवृत्तिदर्शनात्॥३।२।३६॥

शरीरे चैतन्यनिवृत्तिः। आरम्भनिवृत्तिदर्शनादिच्छाद्वेषज्ञानैर्योग इति प्राप्तं परश्वादेः करणस्य [१]तद्दर्शनाच्चैतन्यमिति। अथ शरीरस्येच्छादिभिर्योगः, परश्वादेस्तु करणस्यारम्भनिवृत्ती व्यभिचरतः, न तर्ह्ययं हेतुः पार्थिवाप्यतैजसवायवीयानां शरीराणामारम्भनिवृत्तिदर्शनादिच्छाद्वेषज्ञानैर्योग इति।

अयं तर्ह्यन्योऽर्थः, तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः। पृथिव्यादीनां भूतानामारम्भस्तावत् त्रसस्थावरशरीरेषु तदवयवव्यूहलिङ्गः प्रवृत्तिविशेषः आरम्भः[२], लोष्टादिषु च लिङ्गाभावात् प्रवृत्तिविशेषाभावो निवृत्तिः। आरम्भनिवृत्तिलिङ्गौ चेच्छाद्वेषाविति। पार्थिवाद्येष्वणुषु तद्दर्शनादिच्छाद्वेषयोगः। तद्योगाज् ज्ञानयोग इति सिद्धं भूतचैतन्यमिति।

कुम्भादिष्वनुपलब्धेरहेतुः। कुम्भादिषु मृदवयवानां व्यूहलिङ्गः प्रवृत्तिविशेष आरम्भः। सिकतादिषु प्रवृत्तिविशेषाभावो निवृत्तिः। न च मृत्सिकतानामारम्भनिवृत्तिदर्शनाद् इच्छाद्वेषप्रयत्नज्ञानैर्योग इति। तस्मात् तल्लिङ्गत्वादिच्छाद्वेषयोरित्यहेतुरिति॥३६॥

[**वा** पृ: ४०३; **टी** पृ: ५३०; **प** पृ: ४८३]

## नियमानियमौ तु तद्विशेषकौ॥३।२।३७॥

---

१. आरम्भनिवृत्तिदर्शनात् for तद्दर्शनात् TC २. आरम्भः Om TC

तयोरिच्छाद्वेषयोर्नियमानियमौ विशेषकौ भेदकौ। ज्ञस्येच्छाद्वेषनिमित्ते प्रवृत्तिनिवृत्ती, न स्वाश्रये। किं तर्हि? प्रयोज्याश्रये। तत्र प्रयुज्यमानेषु भूतेषु प्रवृत्तिनिवृत्ती स्तः, न सर्वेष्वित्यनियमोपपत्तिः।

यस्य तु ज्ञत्वाद् भूतानामिच्छाद्वेषनिमित्ते आरम्भनिवृत्ती स्वाश्रये तस्य [1]नियमः स्यात्। यथा भूतानां गुणान्तरनिमित्ता प्रवृत्तिर्गुणप्रतिबन्धाच्च निवृत्तिर्भूतमात्रे भवति नियमेन, एवं भूतमात्रे ज्ञानेच्छाद्वेषनिमित्ते प्रवृत्तिनिवृत्ती स्वाश्रये स्याताम्, न तु भवतः। तस्मात् प्रयोजकाश्रिता ज्ञानेच्छाद्वेषप्रयत्नाः, प्रयोज्याश्रये तु प्रवृत्तिनिवृत्ती इति सिद्धम्।

एकशरीरे तु ज्ञातृबहुत्वं निरनुमानम्। **भूतचैतनिक**स्यैकशरीरे बहूनि भूतानि, तानि च[2] ज्ञानेच्छाद्वेषप्रयत्नगुणानीति ज्ञातृबहुत्वं प्राप्तम्। ओमिति ब्रुवतः प्रमाणं नास्ति। यथा [3]शरीरान्तरेषु नाना ज्ञातारो बुद्ध्यादिगुणव्यवस्थानात्, एवमेकशरीरेऽपि बुद्ध्यादिव्यवस्थानुमानं स्यात् ज्ञातृबहुत्वस्येति।

दृष्टश्चान्यगुणनिमित्तः प्रवृत्तिविशेषो भूतानाम्, सोऽनुमानमन्यत्रापि। दृष्टः करणलक्षणेषु भूतेषु परश्वादिषु उपादानलक्षणेषु च मृत्प्रभृतिष्वन्यगुणनिमित्तः प्रवृत्तिविशेषः। सोऽनुमानमन्यत्रापि त्रसस्थावरशरीरेषु। तदवयवव्यूहलिङ्गः प्रवृत्तिविशेषो भूतानामन्यगुणनिमित्त इति। स च गुणः प्रयत्नसमानाश्रयः संस्कारो धर्माधर्मसमाख्यातः सर्वार्थः पुरुषार्थाराधनाय प्रयोजको भूतानां प्रयत्नवदिति।

आत्मास्तित्वहेतुभिरात्मनित्यत्वहेतुभिश्च भूतचैतन्यप्रतिषेधः कृतो वेदितव्यः।

**नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात् [ ३।२।१८ ]**

इति च समानः प्रतिषेध इति। क्रियामात्रं क्रियोपरममात्रं चारम्भनिवृत्ती इत्यभिप्रेत्योक्तम्—

**तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः [ ३।२।३५ ]**

---

१. नियमः स्यात् Om J २. तानि च J only ३. नानाशरीरेषु C

इति। अन्यथा त्विमे आरम्भनिवृत्ती व्याख्याते। न च तथाविधे पृथिव्यादिषु दृश्येते। तस्मादयुक्तम्—

**तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः [ ३ ।२ ।३५ ]**

इति ॥३७ ॥

[**वा** पृ: ४०४; **टी** पृ: ५३२; **प** पृ: ४८४]

भूतेन्द्रियमनसां समानः प्रतिषेधः, मनस्तूदाहरणमात्रम्।

**यथोक्तहेतुत्वात् पारतन्त्र्यात्स्वकृताभ्यागमाच्च न मनसः ॥३ ।२ ।३८ ॥**

**इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम् [ १ ।१ ।१० ]**

इत्यतः प्रभृति यथोक्तं संगृह्यते। तेन भूतेन्द्रियमनसां चैतन्यप्रतिषेधः।

पारतन्त्र्यात्—परतन्त्राणि भूतेन्द्रियमनांसि धारणप्रेरणव्यूहनक्रियासु प्रयत्नवशात् प्रवर्तन्ते। चैतन्ये पुनः स्वतन्त्राणि स्युरिति।

[१]स्वकृताभ्यागमाच्च—**प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः [ १ ।१ ।१७ ]**

इति चैतन्ये भूतेन्द्रियमनसां परकृतं कर्म पुरुषेणोपभुज्यत इति स्यात्, अचैतन्ये तु तत्साधनस्य स्वकृतकर्मफलोपभोगः पुरुषस्येत्युपपद्यत इति ॥३८ ॥

[**वा** पृ: ४०४; **टी** पृ: ५३४; **प** पृ: ४८४]

अथायं सिद्धोपसंग्रहः—

**परिशेषाद् यथोक्तहेतूपपत्तेश्च ॥३ ।२ ।३९ ॥**

---

१. अकृताभ्यागमाच्च C

आत्मगुणो ज्ञानमिति प्रकृतम्। परिशेषो नाम प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे सम्प्रत्ययः [न्या० भा० १.१.५] भूतेन्द्रियमनसां ज्ञानप्रतिषेधे द्रव्यान्तरं न प्रसज्यते, परिशिष्यते चात्मा। तस्य गुणो ज्ञानमिति हि ज्ञायते।

यथोक्तहेतूपपत्तेश्चेति—**दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् [ ३।१।१ ]** इत्येवमादीनामात्मप्रतिपत्तिहेतूनामप्रतिषेधादिति। परिशेषज्ञापनार्थं प्रकृतस्थापनादिज्ञानार्थं च यथोक्तहेतूपपत्तिवचनमिति।

अथ वा उपपत्तेश्चेति हेत्वन्तरमेवेदम्। नित्यः खल्वयमात्मा अस्मिन् शरीरे धर्मं चरित्वा कायस्य भेदात् स्वर्गे देवेषूपपद्यते। अधर्मं चरित्वा परं देहभेदात् नरकेषूपपद्यत इति। उपपत्तिरुत्पत्तिः शरीरान्तरप्राप्तिलक्षणा। सा सति सत्त्वे नित्ये चाश्रयवती, बुद्धिप्रबन्धमात्रे तु निरात्मके निराश्रया नोपपद्यत इति। एकसत्त्वाधिष्ठानश्चानेकशरीरयोगः संसार उपपद्यते। शरीरप्रबन्धोच्छेदश्चापवर्गो विमुक्तिरित्युपपद्यते। बुद्धिसन्ततिमात्रे त्वेकसत्त्वानुपपत्तेर्न कश्चिद् दीर्घमध्वानं सन्धावति, न कश्चिच्छरीरप्रबन्धाद् विमुच्यत इति संसारापवर्गानुपपत्तिरिति। बुद्धिसन्ततिमात्रे च सत्त्वभेदप्रसङ्गात्[१] सर्वमिदं प्राणिव्यवहारजातमप्रतिसंहितमव्यावृत्तमपरिनिष्ठं च स्यात्। ततः स्मरणाभावात् नान्यदृष्टमन्यः स्मरतीति। स्मरणं च खलु पूर्वज्ञातस्य विषयस्य[२] समानेन ज्ञात्रा ग्रहणम् अज्ञासिषममुमर्थं ज्ञेयमिति। सोऽयमेको ज्ञाता पूर्वज्ञातं विषयं गृह्णाति। तच्चास्य ग्रहणं स्मरणमिति। तद् बुद्धिप्रबन्धमात्रे निरात्मके नोपपद्यते॥३९॥

[**वा** पृः ४०५; **टी** पृः ५३४; **प** पृः ४८४]

**स्मरणं त्वात्मनो ज्ञस्वाभाव्यात्॥३।२।४०॥**

१. सत्त्वभेदात् C  २. विषयस्य Om C

उपपद्यत इति। आत्मन एव स्मरणम्, न बुद्धिसन्ततिमात्रस्येति। तुशब्दोऽवधारणे। कथम्? ज्ञस्वभावत्वात्। ज्ञ इति अस्य स्वभावः[१] स्वो धर्मः। अयं खलु ज्ञास्यति, जानाति, अज्ञासीदिति त्रिकालविषयेणानेकेन ज्ञानेन एकः संबध्यते। तच्चास्य त्रिकालविषयं ज्ञानं[२] प्रत्यात्मवेदनीयं ज्ञास्यामि, जानामि, अज्ञासिषमिति वर्तते। तद् यस्यायं स्वो धर्मस्तस्य स्मरणम्, न बुद्धिप्रबन्धमात्रस्य निरात्मकस्येति ॥४० ॥

[**वा** पृः ४०५; **टी** पृः ५३५; **प** पृः ४८५]

स्मृतिहेतूनामयौगपद्याद् युगपदस्मरणमित्युक्तम् [द्रः न्या. भा. ३ ।२ ।३३]। अथ केभ्यः स्मृतिरुत्पद्यत इति? स्मृतिः खलु—

**प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसम्बन्धानन्तर्यवियोगैककार्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्मनिमित्तेभ्यः ॥३ ।२ ।४१ ॥**

(१) सुस्मूर्षया मनसो धारणं प्रणिधानम्। सुस्मूर्षितलिङ्गानुचिन्तनं[३]वार्थस्मृतिकारणम्। (२) निबन्धः खल्वेकग्रन्थोपयमोऽर्थानाम्। एकग्रन्थोपयताः खल्वर्था अन्योन्यस्मृतिहेतव आनुपूर्व्येणेतरथा वा[४] भवन्तीति। धारणाशास्त्रकृतो वा प्रज्ञातेषु वस्तुषु स्मर्तव्यानामुपनिक्षेपो निबन्ध इति। (३) अभ्यासस्तु समाने विषये ज्ञानानामभ्यावृत्तिः। अभ्यासजनितः संस्कार आत्मगुणोऽभ्यासशब्देनोच्यते। स च स्मृतिहेतुः समान इति। (४) लिङ्गं पुनः **संयोगि समवाय्येकार्थसमवायि विरोधि चेति [द्रः वै. सू. (च) ३ ।१ ।८ ]**। यथा धूमोऽग्नेः, गोर्विषाणम्,

---

१. सोऽयं ज्ञस्वभावः added J २. त्रिकालविषयं ज्ञानं Om J ३. वानुस्मृति° J
४. आनुपूर्व्या for आनुपूर्व्येण J

पाणिः पादस्य, रूपं स्पर्शस्य, **अभूतं भूतस्य [ द्रः वै. सू. ( च ) ३।१।८ ]**। (५) लक्षणं पश्ववयवस्थं गोत्रस्य स्मृतिहेतुः। विदानामिदम्, गर्गाणामिदमिति। (६) सादृश्यं तु चित्रगतं तत्प्रतिरूपकं देवदत्तस्येत्येवमादि। (७) परिग्रहात् तु स्वेन वा स्वामी, स्वामिना वा स्वं स्मर्यते। (८) आश्रयाद् ग्रामण्या तदधीनं संस्मरति। (९) आश्रितात् तदधीनेन ग्रामण्यमिति। (१०) संबन्धात् अन्तेवासिना युक्तं गुरुं स्मरति[१], ऋत्विजा याज्यमिति। (११) आनन्तर्याद् इतिकरणीयेष्वर्थेषु। (१२) वियोगात् येन वियुज्यते तद्वियोगप्रतिसंवेदी भृशं स्मरति। (१३) एककार्यात् कर्त्रन्तरदर्शनात्[२] कर्त्रन्तरे स्मृतिः। (१४) विरोधाद् विजिगीषमाणयोर-न्यतरदर्शनादन्यतरः स्मर्यते। (१५) अतिशयाद् येनातिशय उत्पादितः। (१६) प्राप्तेर्यतो येन किञ्चित् प्राप्तमाप्तव्यं वा भवति, तमभीक्ष्णं स्मरति। (१७) व्यवधानात् कोशादिभिरसिप्रभृतीनि स्मर्यन्ते। (१८-९) सुखदुःखाभ्यां तद्धेतुः स्मर्यते। (२०-१) इच्छाद्वेषाभ्यां यमिच्छति यं च द्वेष्टि [३]तमभीक्ष्णं स्मरति। (२२) भयात् यतो विभेति तं स्मरति[४]। (२३) अर्थित्वाद् येनार्थी भोजनेनाच्छादनेन वा। (२४) क्रियया रथेन रथकारं स्मरति। (२५)रागाद् यस्यां स्त्रियां रक्तो भवति, तामभीक्ष्णं स्मरति। (२६) धर्माज् जात्यन्तरस्मरणम्, इह चाधीत-श्रुतावधारणमिति। (२७) अधर्मात् प्रागनुभूतदुःखदुःखसाधनस्मरणमिति[५]।

न चैतेषु निमित्तेषु युगपत् संवेदनानि भवन्तीति युगपदस्मरणमिति। निदर्शनमात्रं[६] चेदं स्मृतिनिमित्तानां[७] न परिसंख्यानमिति।।४१॥

।।बुद्धेरात्मगुणत्वप्रकरणम्॥

---

१. युक्तं and स्मरति Om J २. कर्त्र...त् Om J ३. अभीक्ष्णं Om C ४. तं स्मरति Om C ५. दुःख added J, साधनं स्मरति TC ६. मात्र Om C ७. स्मृतिहेतूनां C

## [ बुद्धेरुत्पन्नापवर्गित्वप्रकरणम् ]

[**वा** पृ: ४०६; **टी** पृ: ५३७; **प** पृ: ४८६]

अनित्यायां च बुद्धावुत्पन्नापवर्गित्वात् कालान्तरावस्थानाच्चानित्यानां संशयः, किमुत्पन्नापवर्गिणी बुद्धिः शब्दवत्? आहोस्वित् कालान्तरावस्थायिनी कुम्भवदिति। उत्पन्नावपर्गिणीति पक्षः परिगृह्यते। कस्मात्?

**कर्मानवस्थायिग्रहणात्॥३।२।४२॥**

कर्मणोऽनवस्थायिनो ग्रहणादिति। क्षिप्तस्येषोरापतनात् क्रियासन्तानो गृह्यते, प्रत्यर्थनियतत्वाच्च बुद्धीनां क्रियासन्तानवद् बुद्धिसन्तानोपपत्तिरिति। अवस्थितग्रहणे च व्यवधीयमानस्य प्रत्यक्षनिवृत्तेः। अवस्थिते च कुम्भे गृह्यमाणे सन्तानेनैव बुद्धिर्वर्तते प्राग् व्यवधानात्। तेन व्यवहिते हि प्रत्यक्षं ज्ञानं निवर्तते। कालान्तरावस्थाने तु बुद्धेर्दृश्यव्यवधानेऽपि प्रत्यक्षमवतिष्ठेतेति।

स्मृतिश्चालिङ्गं बुद्धिव्यवस्थाने, संस्कारस्य बुद्धिजस्य स्मृतिहेतुत्वात्। यश्च मन्येतावतिष्ठते बुद्धिः, दृष्टा हि बुद्धिविषये स्मृतिः, सा हि बुद्धावनित्यायां कारणाभावान्न स्यादिति, तदिदम् अलिङ्गम्। कस्मात्? बुद्धिजो हि संस्कारो गुणान्तरं स्मृतिहेतुर्न बुद्धिरिति।

हेत्वभावादयुक्तमिति चेत्? न[१] बुद्ध्यवस्थानात् प्रत्यक्षत्वे स्मृत्यभावः। यावदवतिष्ठते बुद्धिः, तावदसौ बोद्धव्योऽर्थः प्रत्यक्षः, प्रत्यक्षे च स्मृतिरनुपपन्नेति॥४२॥

---

१. न J only; उत्तरं added prior to न J margin

[**वा** पृः ४०७; **टी** पृः ५३८; **प** पृः ४८७]

**अव्यक्तग्रहणमनवस्थायित्वाद् विद्युत्सम्पाते रूपाव्यक्तग्रहण-वत्॥३।२।४३॥**

यद्युत्पन्नापवर्गिणी बुद्धिः प्राप्तमव्यक्तं बोद्धव्यस्य ग्रहणम्। यथा विद्युत्सम्पाते वैद्युतस्य प्रकाशस्यानवस्थानादव्यक्तं रूपग्रहणमिति। व्यक्तं तु द्रव्याणां ग्रहणम्। तस्मादयुक्तमेतदिति॥४३॥

[**वा** पृः ४०७; **टी** पृः ५३८; **प** पृः ४८७]

**हेतूपादानात् प्रतिषेद्धव्याभ्यनुज्ञा॥३।२।४४॥**

उत्पन्नापवर्गिणी बुद्धिरिति प्रतिषेद्धव्यं तदेवाभ्यनुज्ञायते, विद्युत्सम्पाते रूपाव्यक्तग्रहणवदिति।

यत्राव्यक्तग्रहणं तत्रोत्पन्नापवर्गिणी बुद्धिरिति। ग्रहणहेतुविकल्पाद् ग्रहणविकल्पो न बुद्धिविकल्पात्। यदिदं क्वचिदव्यक्तं ग्रहणं क्वचिद् व्यक्तम्, अयं विकल्पो ग्रहणहेतुविकल्पात् यत्रानवस्थितो ग्रहणहेतुः, तत्राव्यक्तं ग्रहणम्। यत्रावस्थितः, तत्र व्यक्तं ग्रहणम् न तु बुद्धेरवस्थानानवस्थानाभ्यामिति। कस्मात्? अर्थग्रहणं हि बुद्धिः। यत् तदर्थग्रहणमव्यक्तं व्यक्तं वा बुद्धिः सेति। विशेषाग्रहणे च सामान्यग्रहणमात्रमव्यक्तग्रहणम्। तत्र विषयान्तरे बुद्ध्यन्तरानुत्पत्ति-र्निमित्ताभावात्। यत्र समानधर्मयुक्तश्च धर्मी गृह्यते, विशेषधर्मयुक्तश्च, तद् व्यक्तं ग्रहणम्। यत्र तु विशेषेऽगृह्यमाणे सामान्यग्रहणमात्रम्, तदव्यक्तं ग्रहणम्। समानधर्मयोगाच्च विशिष्टधर्मयोगो विषयान्तरम्। तत्र यद् व्यक्तं ग्रहणं न भवति,

तद् ग्रहणनिमित्ताभावान्न बुद्धेरनवस्थानादिति। यथाविषयं च ग्रहणं व्यक्तमेव प्रत्यर्थनियमाद् बुद्धीनाम्। सामान्यविषयं च ग्रहणं स्वविषयं प्रति व्यक्तम्। विशेषविषयं च ग्रहणं स्वविषयं प्रति व्यक्तम्। प्रत्यर्थनियता हि बुद्धयः। तदिदमव्यक्तग्रहणं देशितं क्व विषये बुद्ध्यनवस्थानकारितं स्यादिति?

धर्मिणस्तु धर्मभेदे बुद्धिनानात्वस्य भावाभावाभ्यां तदुपपत्तिः। धर्मिणः खल्वर्थस्य समानाश्च धर्माः, विशिष्टाश्च। तेषु प्रत्यर्थनियता नानाबुद्धयः। ता उभय्यो यदि धर्मिणि वर्तन्ते, तदा व्यक्तं ग्रहणं धर्मिणमभिप्रेत्य। यदा तु सामान्यग्रहणमात्रम्, तदा अव्यक्तं ग्रहणमिति। एवं धर्मिणमभिप्रेत्य[१] व्यक्ताव्यक्तयोर्ग्रहणयोरुपपत्तिरिति ॥४४॥

[**वा** पृ: ४०८; **टी** पृ: ५३९; **प** पृ: ४८८]

न चेदमव्यक्तं ग्रहणं बुद्धेर्बोद्धव्यस्य वानवस्थायित्वादुपपद्यत इति। इदं हि—

**न प्रदीपार्चिःसन्तत्यभिव्यक्तग्रहणवत् तद्ग्रहणम् ॥३।२।४५॥**

अनवस्थायित्वेऽपि बुद्धेस्तेषां द्रव्याणां ग्रहणं व्यक्तं प्रतिपत्तव्यम्। कथम्? प्रदीपार्चिःसन्तत्यभिव्यक्तग्रहणवत्। प्रदीपार्चिषां सन्तत्या वर्तमानानां ग्रहणानवस्थानं ग्राह्यानवस्थानं च प्रत्यर्थनियतत्वाद् बुद्धीनाम्। यावन्ति प्रदीपार्चींषि तावत्यो बुद्धय इति। दृश्यते चात्र व्यक्तं प्रदीपार्चिषां ग्रहणमिति ॥४५॥

॥बुद्धेरुत्पन्नापवर्गित्वप्रकरणम्॥

---

१. धर्मि...त्य Om J

# [ बुद्धेः शरीरगुणव्यतिरेकप्रकरणम् ]

[**वा** पृः ४०८; **टी** पृः ५३९; **प** पृः ४८८]

चेतना शरीरगुणः, सति शरीरे भावादसति चाभावादिति—

**द्रव्ये स्वगुणपरगुणोपलब्धेः संशयः॥३।२।४६॥**

सांशयिकः सति भावः। स्वगुणश्चाप्सु द्रवत्वमुपलभ्यते परगुणश्चोष्णता। चेतनायां[१] संशयः किं शरीरगुणश्चेतना सति शरीरे गृह्यते, अथ द्रव्यान्तरगुण इति।।४६॥

[**वा** पृः ४०९; **टी** पृः ५३९; **प** पृः ४८८]

न शरीरगुणश्चेतना। कस्मात्?

**यावच्छरीरभावित्वाद् रूपादीनाम्॥३।२।४७॥**

न कदाचिद्[२] रूपादिहीनं शरीरं गृह्यते, चेतनाहीनं तु गृह्यते। यथोष्णताहीना आपः। तस्मान्न शरीरगुणश्चेतनेति।

संस्कारवदिति चेत्? न, कारणानुच्छेदात्। यथाविधे द्रव्ये संस्कारस्तथाविध एवोपरमः। न, तत्र कारणोच्छेदादत्यन्तं संस्कारानुपपत्तिर्भवति। यथाविधे तु शरीरे चेतना गृह्यते, तथाविध एवात्यन्तोपरमश्चेतनाया गृह्यते। तस्मात् संस्कारवदित्यसमः समाधिः।

---

१. तेनायं C २. कदाचिद् J only

अथापि शरीरस्थं चेतनोत्पत्तिकारणं स्यात्, द्रव्यान्तरस्थं वा, उभयस्थं वा? तन्न[१], नियमहेत्वभावात्। शरीरस्थेन कदाचिच्चेतनोत्पद्यते, कदाचिन्नेति नियमे हेतुर्नास्तीति। द्रव्यान्तरस्थेन च शरीर एव चेतनोत्पद्यते, न लोष्टादिष्वित्यत्र च नियमहेतुर्नास्तीति। उभयस्थस्य निमित्तत्वे च शरीरसमानजातीयद्रव्ये चेतना नोत्पद्यते, शरीर एव चोत्पद्यत इत्यत्र च[२] नियमे हेतुर्नास्तीति[३] ॥४७॥

[**वा** पृः ४१०; **टी** पृः ५४०; **प** पृः ४८९]

यच्च मन्येत सति श्यामादिगुणे द्रव्ये श्यामाद्युपरमो दृष्टः, एवं चेतनोपरमः स्यादिति—

## न, पाकजगुणान्तरोत्पत्तेः ॥३।२।४८॥

नात्यन्तं रूपोपरमो द्रव्यस्य। श्यामे रूपे निवृत्ते पाकजं गुणान्तरं रक्तं रूपमुत्पद्यते। शरीरे तु चेतनामात्रोपरमोऽत्यन्तमिति[४] ॥४८॥

[**वा** पृः ४१०; **टी** पृः ५४०; **प** पृः ४८९]

अथापि,

## प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः ॥३।२।४९॥

यावत्सु द्रव्येषु पूर्वगुणप्रतिद्वन्द्विसिद्धिस्तावत्सु पाकजोत्पत्तिर्दृश्यते, पूर्वगुणैः सह पाकजानामवस्थानस्याग्रहणात्[५]। न च शरीरे चेतना प्रतिद्वन्द्विसिद्धौ

---

१. उभयं चासम्बद्धम् for उभयस्थं वा तन्न J २. इति for इत्यत्र च C ३. नियमहेतुः for नियमे हेतुः J ४. उत्पन्नम् for अत्यन्तम् J ५. अनवस्थानग्रहणात् for अवस्थानस्याग्रहणात् J

सहानवस्थायि गुणान्तरं गृह्यते येनानुमीयेत तेन चेतनाया विरोधः। तस्मादप्रतिषिद्धा चेतना यावच्छरीरं वर्तेत, न तु वर्तते। तस्मान्न शरीरगुणश्चेतना[1] इति ॥४९ ॥

[**वा** पृः ४११; **टी** पृः ५४०; **प** पृः ४९०]

इतश्च न शरीरगुणश्चेतना—

**शरीरव्यापित्वात् ॥३ ।२ ।५० ॥**

शरीरं शरीरावयवाश्च सर्वे चेतनोत्पत्त्या व्याप्ता इति न क्वचिदनुत्पत्तिश्चेतनायाः। शरीरवच्छरीरावयवाश्चेतना इति प्राप्तं चेतनबहुत्वम्। तत्र यथा प्रतिशरीरं चेतनबहुत्वे सुखदुःखज्ञानानां व्यवस्था लिङ्गमेवमेकशरीरेऽपि स्यात्। न तु भवति। तस्मान्न शरीरगुणश्चेतनेति ॥५० ॥

[**वा** पृः ४११; **टी** पृः ५४०; **प** पृः ४९०]

यदुक्तं न क्वचिच्छरीरावयवे चेतनाया अनुत्पत्तिरिति सा[2]—

**न, केशनखादिष्वनुपलब्धेः ॥३ ।२ ।५१ ॥**

केशेषु नखादिषु चानुत्पत्तिश्चेतनाया इत्यनुपपन्नं शरीरव्यापित्वमिति ॥५१ ॥

[**वा** पृः ४११; **टी** पृः ५४१; **प** पृः ४९०]

**त्वक्पर्यन्तत्वाच्छरीरस्य केशनखादिष्वप्रसङ्गः ॥३ ।२ ।५२ ॥**

---

१. चेतना Om J    २. सा Om J

इन्द्रियाश्रयत्वं शरीरलक्षणम्। त्वक्पर्यन्तं[१] जीवमनःसुखदुःखसंवित्त्यायतनभूतं[२] शरीरम्। तस्मान्न केशादिषु चेतनोत्पद्यते। अर्थकारितस्तु शरीरोपनिबन्धः केशादीनामिति ॥५२॥

[**वा** पृः ४१२; **टी** पृः ५४१; **प** पृः ४९१]

इतश्च न शरीरगुणश्चेतना—

**शरीरगुणवैधर्म्यात्॥३।२।५३॥**

द्विविधः शरीरगुणः—प्रत्यक्षश्चाप्रत्यक्षश्च[३]। अप्रत्यक्षं गुरुत्वम्, इन्द्रियग्राह्यश्च रूपादिः। विधान्तरं तु चेतना, नाप्रत्यक्षा संवेद्यत्वात्, नेन्द्रियग्राह्या, मनोविषयत्वात्। तस्माद् द्रव्यान्तरगुण इति ॥५३॥

[**वा** पृः ४१२; **टी** पृः ५४१; **प** पृः ४९१]

**न, रूपादीनामितरेतरवैधर्म्यात्॥३।२।५४॥**

यथेतरेतरविधर्माणो रूपादयो न शरीरगुणत्वं जहति, एवं रूपादिवैधर्म्याच्चेतना शरीरगुणत्वं न हास्यतीति ॥५४॥

[**वा** पृः ४१२; **टी** पृः ५४१; **प** पृः ४९१]

**ऐन्द्रियकत्वाद् रूपादीनामप्रतिषेधः॥३।२।५५॥**

---

१. त्वक्पर्यन्तो हि J   २. ०भूतः J   ३. प्रत्यक्षा ...श्च । J only

अप्रत्यक्षत्वाच्चेति। यथेतरेतरविधर्माणो रूपादयो न द्वैविध्यमतिवर्तन्ते, तथा रूपादिवैधर्म्याच्चेतना न द्वैविध्यमतिवर्तेत यदि शरीरगुणः स्यात्। अतिवर्तते तु, तस्मान्न शरीरगुण इति।

भूतेन्द्रियमनसां ज्ञानप्रतिषेधात् सिद्धे सत्यारम्भो विशेषज्ञापनार्थः। बहुधा परीक्ष्यमाणं तत्त्वं सुनिश्चिततरं भवतीति॥५५॥

॥बुद्धेः शरीरगुणव्यतिरेकप्रकरणम्॥

## [ मनःपरीक्षाप्रकरणम् ]

[**वा** पृः ४१३; **टी** पृः ५४२; **प** पृः ४९२]

परीक्षिता बुद्धिः। मनस इदानीं परीक्षाक्रमः। तत् किं प्रतिशरीरमेकमनेकमिति विचारे—

**ज्ञानायौगपद्यादेकं मनः॥३।२।५६॥**

अस्ति खलु वै ज्ञानायौगपद्यमेकैकस्येन्द्रियस्य यथाविषयम्, करणस्यैक-प्रत्ययनिर्वृत्तौ सामर्थ्यात्। न तदेकत्वे मनसो लिङ्गम्। यत्तु खल्विदमिन्द्रियान्तराणां विषयान्तरेषु ज्ञानायौगपद्यमिति तल्लिङ्गम्। कस्मात्? संभवति खलु वै बहुषु मनःस्विन्द्रियमनःसंयोगयौगपद्यमिति ज्ञानयौगपद्यं स्यात्, न तु भवति। तस्माद् विषयान्तरेषु[१] प्रत्ययपर्यायादेकं मन इति॥५६॥

[**वा** पृः ४१३; **टी** पृः ५४२; **प** पृः ४९२]

**न, युगपदनेकक्रियोपलब्धेः॥३।२।५७॥**

---

१. विषये C

अयं खल्वध्यापकोऽधीते व्रजति कमण्डलुं धारयति पन्थानं पश्यति शृणोत्यारण्यजान् शब्दान् विभ्यद् व्याललिङ्गानि च बुभुत्सते स्मरति च गन्तव्यं संस्त्यायनमिति। क्रमस्याग्रहणाद् युगपदेताः क्रिया इति प्राप्तं मनसां बहुत्वमिति ॥५७॥

[**वा** पृः ४१३; **टी** पृः ५४२; **प** पृः४९२]

**अलातचक्रदर्शनवत्तदुपलब्धिराशुसञ्चारात् ॥३।२।५८॥**

आशुसञ्चाराद् यथा[१] अलातस्य भ्रमतो विद्यमानः क्रमो न गृह्यते, क्रमस्याग्रहणादविच्छेदबुद्ध्या चक्रवद्बुद्धिर्भवति, तथा बुद्धीनां क्रियाणां चाशुवृत्तित्वाद् विद्यमानः क्रमो न गृह्यते। क्रमस्याग्रहणाद् युगपत् क्रिया भवन्तीत्यभिमानो भवतीति।

किं पुनः क्रमस्याग्रहणाद् युगपत् क्रियाभिमानः, अथ युगपद्भावादेव युगपदनेकक्रियोपलब्धिरिति नात्र विशेषप्रतिपत्तिकारणमुच्यत इति। उक्तमिन्द्रियाणां[२] विषयान्तरेषु पर्यायेण बुद्धयो भवन्तीति। तच्चाप्रत्याख्येयमात्मप्रत्यक्षत्वात्।

अथापि दृष्टश्रुतानर्थान् चिन्तयतः क्रमेण बुद्धयो वर्तन्ते न युगपदनेनानुमातव्यमिति। वर्णपदवाक्यबुद्धीनां तदर्थबुद्धीनां चाशुवृत्तित्वात् क्रमस्याग्रहणम्। कथम्[३]? वाक्यस्थेषु खलु वर्णेषूच्चरत्सु प्रतिवर्णं तावच्छ्रवणं भवति। श्रुतं वर्णमेकमनेकं वा पदभावेन स प्रतिसन्धत्ते। प्रतिसन्धाय पदं व्यवस्यति पदव्यवसायात् स्मृत्या पदार्थं प्रतिपद्यते। पदसमूहप्रतिसन्धानाच्च वाक्यं व्यवस्यति। सम्बद्धांश्च पदार्थान् गृहीत्वा वाक्यार्थं प्रतिपद्यते। न चासां क्रमेण वर्तमानानां बुद्धीनामाशुवृत्तित्वात्

---

१. यथा Om C   २. इन्द्रियान्तराणां C   ३. कथम् Om J

क्रमो गृह्यते। तदेतदनुमानमन्यत्र बुद्धिक्रियायौगपद्याभिमानस्येति। न चास्ति मुक्तसंशया युगपदुत्पत्तिर्बुद्धीनाम्, यथा मनसां बहुत्वमेकशरीरेऽनुमीयेत इति ॥५८॥

[**वा** पृ: ४१४; **टी** पृ: ५४२; **प** पृ: ४९२]

**यथोक्तहेतुत्वाच्चाणु ॥३।२।५९॥**

अणु च मन एकं चेति धर्मसमुच्चयो ज्ञानायौगपद्यात्। महत्वे मनसः सर्वेन्द्रियसंयोगाद् युगपद् विषयग्रहणं स्यादिति ॥५९॥

॥मनःपरीक्षाप्रकरणम्॥

## [ शरीरस्यादृष्टनिष्पाद्यत्वप्रकरणम् ]

[**वा** पृ: ४१४; **टी** पृ: ५४३; **प** पृ: ४९३]

मनसः खलु भोः सेन्द्रियस्य शरीरे वृत्तिलाभो नान्यत्र शरीरात्। ज्ञातुश्च पुरुषस्य शरीरायतना बुद्ध्यादयो गुणा[१] विषयोपभोगो जिहासितहानमीप्सितावाप्तिश्च सर्वे च शरीराश्रया व्यवहाराः। तत्र खलु विषये[२] विप्रतिपत्तेः संशयः, किमयं पुरुषकर्मनिमित्तः शरीरसर्गः, आहोस्विद् भूतमात्रादकर्मनिमित्त इति। श्रूयते खल्वत्र विप्रतिपत्तिरिति।

तत्रेदं तत्त्वम्—

**पूर्वकृतफलानुबन्धात् तदुत्पत्तिः ॥३।२।६०॥**

---

१. गुणा J only　　२. विषये J only

पूर्वशरीरे या प्रवृत्तिर्वाग्बुद्धिशरीरारम्भलक्षणा तत्पूर्वकृतं कर्मोक्तम्[१]। तस्य फलं तज्जनितौ धर्माधर्मौ। तत्फलस्यानुबन्ध आत्मसमवेतस्यावस्थानम्। तेन अवस्थितेन[२] प्रयुक्तेभ्यो भूतेभ्यस्तस्योत्पत्तिः शरीरस्य, न स्वतन्त्रेभ्यः। यदधिष्ठानोऽयमात्मा यदहमिति मन्यमानो यत्राभिव्यक्तो[३] यत्रोपभोगतृष्णया विषयानुपलभमानो धर्माधर्मौ संस्करोति तदस्य शरीरम्। तेन संस्कारेण धर्माधर्मलक्षणेन भूतसहितेन पतितेऽस्मिन् शरीरे [४]निष्पाद्यते शरीरान्तरम्[५]। निष्पन्नस्य चास्य पूर्वशरीरवत् पुरुषार्थक्रिया। पुरुषस्य च पूर्वशरीरवत् प्रवृत्तिरिति कर्मापेक्षेभ्यो भूतेभ्यः शरीरसर्गे सत्येतदुपपद्यत इति। दृष्टा च पुरुषगुणेन प्रयत्नेन प्रयुक्तेभ्यो भूतेभ्यः पुरुषार्थक्रियासमर्थानां द्रव्याणां रथप्रभृतीनामुत्पत्तिः। तयानुमातव्यं[६] शरीरमपि पुरुषार्थक्रियासमर्थमुत्पद्यमानं पुरुषस्य गुणान्तरापेक्षेभ्यो भूतेभ्य उत्पद्यत इति ॥६० ॥

[**वा** पृः ४१५; **टी** पृः ५४४; **प** पृः ४९४]

अत्र **नास्तिक** आह—

## भूतेभ्यो मूर्त्युपादानवत् तदुपादानम् ॥३ ।२ ।६१ ॥

यथा कर्मनिरपेक्षेभ्यो भूतेभ्यो निर्वृत्ता मूर्तयः सिकताशर्करापाषाणगैरिकाञ्जनप्रभृतयः पुरुषार्थकारित्वादुपादीयन्ते, तथा कर्मनिरपेक्षेभ्यो भूतेभ्यः शरीरमुत्पन्नं पुरुषार्थकारित्वादुपादीयत इति ॥६१ ॥

[**वा** पृः ४१६; **टी** पृः ५४४; **प** पृः ४९४]

## न, साध्यसमत्वात् ॥३ ।२ ।६२ ॥

१. कर्मोक्तम् Om J  २. अवस्थितेन J only  ३. यत्राभियुक्तो C
४. शरीरे उत्तरं निष्पद्यते C; उत्तरं Om J  ५. शरीरान्तरम् J only  ६. तथा for तया C

यथा शरीरोत्पत्तिरकर्मनिमित्ता साध्या तथा [१]सिकताशर्करापाषाणगैरिकाञ्जनप्रभृतीनामप्यकर्मनिमित्तः सर्गः साध्यः, साध्यसमत्वादसाधनमिति ॥६२ ॥

[**वा** पृः ४१६; **टी** पृः ५४४; **प** पृः ४९५]

भूतेभ्यो मूर्त्युपादानवदिति चानेन साम्यम्[२]।

**नोत्पत्तिनिमित्तत्वान्मातापित्रोः ॥३ ।२ ।६३ ॥**

विषमश्चायमुपन्यासः। कस्मात्? निर्बीजा इमा मूर्तयः उत्पद्यन्ते, बीजपूर्विका तु शरीरोत्पत्तिः। मातापितृशब्देन च लोहितरेतसी बीजभूते गृह्येते। तत्र सत्त्वस्य च गर्भवासानुभवनीयं कर्म, मातापित्रोश्च पुत्रफलानुभवनीये कर्मणी मातुर्गर्भाशये[३] शरीरोत्पत्तिं भूतेभ्यः प्रयोजयन्तीत्युपपन्नं बीजानुविधानमिति ॥६३ ॥

[**वा** पृः ४१७; **टी** पृः ५४५; **प** पृः ४९५]

**तथाहारस्य ॥३ ।२ ।६४ ॥**

उत्पत्तिनिमित्तत्वादिति प्रकृतम्। भुक्तं पीतमाहारः तस्य पक्तिनिर्वृत्तं रसद्रव्यं मातुः शरीरे चोपचीयते बीजे च गर्भाशयस्थे बीजसमानपाकम्, मात्रया चोपचयो बीजे यावद्व्यूहसमर्थः सञ्चय इति। सञ्चितं च कललार्वुदमांसपेशीकण्डराशिरःपाण्यादिना च व्यूहेनेन्द्रियाधिष्ठानलक्षणेन[४] व्यूह्यते। व्यूहेऽपि च[५] गर्भे

---

१. पाषाणगैरिकाञ्जन Om J  २. साम्यम् J C var; साध्यम् TC; T justifies साम्यम् by connecting it with न in 3.2.63  ३. ॰गर्भाश्रये TC  ४. भेदेन for लक्षणेन TC  ५. व्यूहे च TC

गर्भनाड्यावतारितं रसद्रव्यमुपचीयते यावत्प्रसवसमर्थमिति। न चायमन्नपानस्य स्थाल्यादिगतस्य कल्पत इति। एतस्मात् कारणात् कर्मनिमित्तत्वं शरीरस्य विज्ञायत[१] इति ॥६४॥

[**वा** पृ: ४१७; **टी** पृ: ५४५; **प** पृ: ४९६]

**प्राप्तौ चानियमात्॥३।२।६५॥**

न सर्वो दम्पत्योः संप्रयोगो[२] गर्भाधानहेतुर्दृश्यते। तत्रासति कर्मणि न भवति सति च भवतीति उपपन्नो नियमाभाव इति। कर्मनिरपेक्षेषु तु भूतेषु शरीरोत्पत्तिहेतुषु नियमः स्यात्। न ह्यत्र कारणाभावः॥६५॥

[**वा** पृ: ४१७; **टी** पृ: ५४५; **प** पृ: ४९६]

अथापि—

**शरीरोत्पत्तिनिमित्तवत् संयोगोत्पत्तिनिमित्तं कर्म॥३।२।६६॥**

यथा खल्विदं शरीरं धातुप्राणसंवाहिनीनां नाडीनां शुक्रान्तानां धातूनां च स्नायुत्वगस्थिशिरापेशीकललकण्डराणां च शिरोबाह्वन्तराणां[३] सक्थ्नां च कोष्ठाङ्गानां[४] च वातपित्तकफानां च [५]मुखकण्ठहृदयामाशयपक्वाशयाधःस्रोतसां च परमदुःख-सम्पादनीयेन सन्निवेशेन व्यूहनमशक्यं पृथिव्यादिभिः कर्मनिरपेक्षैरुत्पादयितुमिति कर्मनिमित्ता शरीरोत्पत्तिर्विज्ञायते। एवं च सति प्रत्यात्मनियतस्य निमित्तस्या-

---

१. शरी...यत Om J    २. संयोगो TC    ३. ॰वाहूदराणां TC    ४. कोष्ठगानां TC    ५. ॰कण्ठ॰ J only

भावान्निरतिशयैरात्मभिः सम्बन्धात् सर्वात्मनां च समानैः पृथिव्यादिभिरुत्पादितं शरीरं पृथिव्यादिगतस्य च नियमहेतोरभावात् सर्वात्मनां सुखदुःखसंवित्त्यायतनं समानं प्राप्तम्। यत्तु प्रत्यात्मं व्यवतिष्ठते तत्र तदेव शरीरोत्पत्तिनिमित्तं कर्म व्यवस्थाहेतुरिति विज्ञायते। [१]परिपच्यमानो हि प्रत्यात्मनियतः कर्माशयो यस्मिन्नात्मनि वर्तते तस्यैवोपभोगायतनं शरीरमुत्पाद्य व्यवस्थापयति। तदेवं

**शरीरोत्पत्तिनिमित्तवत् संयोगनिमित्तं कर्म**

इति विज्ञायते। प्रत्यात्मव्यवस्थानं तु शरीरस्यात्मना संयोगं प्रचक्ष्मह इति॥६६॥

[**वा** पृः ४१८; **टी** पृः ५४६; **प** पृः ४९६]

**एतेनानियमः प्रत्युक्तः॥३।२।६७॥**

योऽयमकर्मनिमित्ते शरीरसर्गे सत्यनियम इत्युच्यते, अयं

**शरीरोत्पत्तिनिमित्तवत् संयोगोत्पत्तिनिमित्तं कर्म [ ३।२।६६ ]**

इत्यनेन प्रत्युक्तः। कस्तावदयं नियमः? यथैकस्यात्मनः शरीरं तथा सर्वेषामिति नियमः। अन्यस्यान्यथान्यस्यान्यथेत्यनियमो भेदो व्यावृत्तिर्विशेष इति। दृष्टा च जन्मव्यावृत्तिरुच्चाभिजनो निकृष्टाभिजन इति, प्रशस्तं निन्दितमिति, व्याधिबहुलमरोगमिति, समग्रं विकलमिति, पीडाबहुलं सुखबहुलमिति, पुरुषातिशयलक्षणोपपन्नं विपरीतमिति, प्रशस्तलक्षणं निन्दितलक्षणमिति, पट्विन्द्रियं मृद्विन्द्रियमिति। सूक्ष्मश्च भेदोऽपरिमेयः[२]। सोऽयं जन्मभेदः प्रत्यात्मनियतात् कर्मभेदादुपपद्यते। असति हि कर्मभेदे प्रत्यात्मनियते निरतिशयत्वादात्मनां समानत्वाच्च पृथिव्यादीनां पृथिव्यादिगतस्य नियमहेतोरभावात् सर्वं सर्वात्मनां प्रसज्येत, न त्विदमित्थम्भूतं जन्म। तस्मान्नाकर्मनिमित्ता शरीरोत्पत्तिरिति।

---

१. परिपक्ष्यमाणो J    २. भेदोऽपरिसंख्येयः J

उपपन्नश्च तद्वियोगः कर्मक्षयोपपत्तेः। कर्मनिमित्ते शरीरसर्गे तेन शरीरेणात्मनो वियोग उपपन्नः। कस्मात्? कर्मक्षयोपपत्तेः। उपपद्यते खलु कर्मक्षयः। सम्यग्दर्शनात् प्रक्षीणे मोहे वीतरागः पुनर्भवहेतुं कर्म [१]कायवाङ्मनोबुद्धिभिर्न करोतीत्युत्तरस्यानुपचयः पूर्वोपचितस्य विपाकप्रतिसंवेदनात् प्रक्षयः। एवं पुनर्भवहेतोरभावात्[२] पतितेऽस्मिन् शरीरे पुनः शरीरान्तरानुपपत्तेरप्रतिसन्धिः। अकर्मनिमित्ते तु शरीरसर्गे भूतक्षयानुपपत्तेस्तद्वियोगानुपपत्तिरिति ॥६७॥

[**वा** पृः ४१९; **टी** पृः ५४७; **प** पृः ४९७]

## तददृष्टकारितमिति चेत् पुनस्तत्प्रसङ्गोऽपवर्गे ॥३।२।६८॥

अदर्शनं खल्वदृष्टमित्युच्यते। अदृष्टकारिता भूतेभ्यः शरीरोत्पत्तिः। न जात्वनुत्पन्ने शरीरे द्रष्टा निरायतनो दृश्यं पश्यति। तच्चास्य दृश्यं द्विविधम्, विषयश्च नानात्वं चाव्यक्तात्मनः। तदर्थः शरीरसर्गः। तस्मिन्नवसिते चरितार्थानि भूतानि न [३]शरीरमुत्पादयन्तीत्युपपन्नः शरीरवियोग इत्येवं चेन्मन्यसे, पुनस्तत्प्रसङ्गोऽपवर्गे। [४]सत्यपवर्गे पुनः शरीरोत्पत्तिः प्रसज्यते। या चानुत्पन्ने शरीरे दर्शनानुत्पत्तिरदर्शनाभिमता, या चापवर्गे शरीरनिवृत्तौ दर्शनानुत्पत्तिरदर्शनभूता नैतयोरदर्शनयोः क्वचिद् विशेष इत्यदर्शनस्यानिवृत्तेरपवर्गे पुनः शरीरोत्पत्तिः प्रसज्यते।

चरितार्थता विशेष इति चेत्? न, करणाकरणयोरारम्भदर्शनात्। चरितार्थानि भूतानि दर्शनावसायान्न[५] शरीरान्तरमारभन्त इत्ययं विशेष इत्येवं चेन्मन्यसे? न, करणाकरणयोरारम्भदर्शनात्। चरितार्थानां च भूतानां विषयोपलब्धिकरणात् पुनः पुनः शरीरारम्भो दृश्यते। प्रकृतिपुरुषयोर्नानात्वदर्शनस्याकरणान्निरर्थकः शरीरारम्भः

---

१. बुद्धि Om TC २. प्रसव for पुनर्भव TC ३. शरीरान्तरम् for शरीरम् J
४. सत्यपवर्गे J only ५. अवसान for अवसाय TC

पुनः पुनर्दृश्यते, तस्मादकर्मनिमित्तायां भूतसृष्टौ न दर्शनार्था[१] शरीरोत्पत्तिर्युक्ता, युक्ता तु कर्मनिमित्ते शरीरसर्गे[२] दर्शनार्था शरीरोत्पत्तिः। कर्मविपाकसंवेदनं हि दर्शनमिति।

तददृष्टकारितमिति चेत्? **कस्यचिद्** दर्शनम्—अदृष्टं नाम परमाणूनां गुणविशेषः क्रियाहेतुः। तेन प्रेरिताः परमाणवः संमूर्च्छिताः शरीरमुत्पादयन्तीति। तन्मनः समाविशति स्वगुणेनादृष्टेन प्रेरितम्। समनस्के शरीरे द्रष्टुरुपलब्धिर्भवतीति। एतस्मिन् वै दर्शने गुणानुच्छेदात् पुनस्तत्प्रसङ्गोऽपवर्गे। अपवर्गे शरीरोत्पत्तिप्रसङ्गः[३], परमाणुगुणस्यादृष्टस्यानुच्छेद्यत्वादिति॥६८॥

[**वा** पृः ४२१; **टी** पृः ५४८; **प** पृः ४९७]

**मनःकर्मनिमित्तत्वाच्च संयोगाव्युच्छेदः ॥३।२।६९॥**

मनोगुणेनादृष्टेन समावेशिते मनसि संयोगव्युच्छेदो न स्यात्। तत्र[४] किंकृतं शरीरादपसर्पणं मनस इति? कर्माशयक्षये तु कर्माशयान्तराद् विपच्यमानादपसर्पणोपपत्तिरिति। अदृष्टादेवापसर्पणमिति चेत्? योऽदृष्टः शरीरोपसर्पणहेतुः स एवापसर्पणहेतुरपीति? न, एकस्य जीवनप्रायणहेतुत्वानुपपत्तेः। एवं च सत्येकमदृष्टं जीवनप्रायणयोर्हेतुरिति प्राप्तम्। न चैतदुपपद्यत इति॥६९॥

[**वा** पृः ४२१; **टी** पृः ५४८; **प** पृः ४९८]

**नित्यत्वप्रसङ्गश्च प्रायणानुपपत्तेः॥३।२।७०॥**

---

१. दृश्यदर्शनार्था J    २. शरीर Om TC    ३. प्रसङ्ग Om TC
४. तच्च C, तत्र JT

विपाकसंवेदनात् कर्माशयक्षये शरीरपातः प्रायणम्। कर्माशयान्तराच्च पुनर्जन्म। भूतमात्रात् तु कर्मनिरपेक्षात् शरीरोत्पत्तौ कस्य क्षयात् शरीरपातः प्रायणमिति? प्रायणानुपपत्तिं[१] खलु वै नित्यत्वप्रसङ्गं विद्म इति। यादृच्छिके च प्रायणे प्रायणभेदानुपपत्तिरिति ॥७० ॥

[ **वा** पृः ४२२; **टी** पृः ५४९; **प** पृः ४९८]

पुनस्तत्प्रसङ्गोऽपवर्ग इत्येतत्समाधित्सु**रपर** आह—

**अणुश्यामतानित्यत्ववदेतत्स्यात्॥३।२।७१॥**

यथा अणोरनादिभूता[२] श्यामता[३] अग्निसंयोगेन प्रतिषिद्धा न पुनरुत्पद्यते एवमदृष्टकारितं शरीरमपवर्गे पुनर्नोत्पद्यत इति॥७१ ॥

[**वा** पृः ४२२; **टी** पृः ५४९; **प** पृः ४९८]

**नाकृताभ्यागमप्रसङ्गात्॥३।२।७२॥**

नायमस्ति दृष्टान्तः। कस्मात्? अकृताभ्यागमप्रसङ्गात्। अकृतं प्रमाणतोऽनुपपन्नम्। तस्याभ्यागमोऽभ्युपपत्तिर्व्यवसायः। एतत् श्रद्दधानेन प्रमाणतोऽनुपपन्नं प्रतिपत्तव्यं स्यादिति। तस्मान्नायं दृष्टान्तो न प्रत्यक्षं न चानुमानं किञ्चिदुपपद्यते। तदिदं दृष्टान्तस्य साध्यसमत्वमभिधीयत इति।

अथवा नाकृताभ्यागमप्रसङ्गात्। अणुश्यामतादृष्टान्तेनाकर्मनिमित्तां शरीरोत्पत्तिं

१. प्रायणानुपपत्तेः TC    २. अनादिभूता J only    ३. श्यामता नित्या TC

समादधानस्याकृताभ्यागमप्रसङ्गः। अकृते सुखदुःखहेतौ कर्मणि पुरुषस्य सुखं दुःखं वाभ्यागच्छतीति प्रसज्यते। ओमिति ब्रुवतः प्रत्यक्षानुमानागमविरोधः।

प्रत्यक्षविरोधस्तावत्, भिन्नमिदं सुखदुःखं प्रत्यात्मवेदनीयत्वात् प्रत्यक्षं सर्वशरीरिणाम्। को भेदः? तीव्रं मन्दम्, चिरमाशु, नानाप्रकारमेकप्रकार-मित्येवमादिर्विशेषः। न चास्ति प्रत्यात्मनियतः सुखदुःखविशेषहेतुः। न चासति हेतुविशेषे फलविशेषो दृश्यते। कर्मनिमित्ते तु सुखदुःखसंयोगे कर्मणां तीव्रमन्दतोपपत्तेः कर्मसन्निचयानां चोत्कर्षापकर्षभावात् नानाविधैकविधभावाच्च कर्मणां सुखदुःखभेदोपपत्तिः[1]। सोऽयं हेतुभेदाभावाद् दृष्ट एव सुखदुःखभेदो न स्यादिति प्रत्यक्षविरोधः।

अथानुमानविरोधः। दृष्टं हि पुरुषगुणव्यवस्थानात् सुखदुःखव्यवस्थानम्। यः खलु चेतनावान् साधननिर्वर्तनीयं सुखं बुद्ध्वा तदीप्सन् साधनावाप्तये प्रयतते, स सुखेन युज्यते न विपरीतः। यश्च साधननिर्वर्तनीयं दुःखं बुद्ध्वा तज्जिहासुः साधनपरिवर्जनाय यतते, स च दुःखेन वियुज्यते, न विपरीतः। अस्ति चेदं प्रयत्नमन्तरेण चेतनानां सुखदुःखव्यवस्थानम्, तेनापि चेतनगुणान्तरव्यवस्थानकृतेन भवितव्यमित्यनुमानम्। तदेतदकर्मनिमित्ते सुखदुःखयोगे विरुध्यत इति। तच्च गुणान्तरमसंवेद्यत्वाददृष्टं विपाककालानियमाच्चाव्यवस्थितम्। बुद्ध्यादयस्तु संवेद्याश्चापवर्गिणश्चेति।

अथागमविरोधः। बहु खल्विदमार्षमृषीणामुपदेशजातमनुष्ठानपरिवर्जनाश्रयम्, उपदेशफलं च शरीरिणां वर्णाश्रमविभागेनानुष्ठानलक्षणा[2] प्रवृत्तिः, परिवर्जनलक्षणा[3] निवृत्तिः। तच्चोभयमेतस्यां दृष्टौ नास्ति कर्म सुचरितं दुश्चरितं वा, अकर्मनिमित्तः पुरुषाणां सुखदुःखयोग इति विरुध्यते।

---

१. सुखदुःखोपपत्तिः J	२. °नुष्ठानपरिवर्जनलक्षणा J	३. परिवर्जन° Om J

सेयं पापिष्ठानां मिथ्यादृष्टिरकर्मनिमित्ता शरीरसृष्टिरकर्मनिमित्तः सुख-दुःखयोग इति ॥७२ ॥

॥शरीरस्यादृष्टनिष्पाद्यत्वप्रकरणम् ॥

॥अवसितं सभाष्ये न्यायदर्शने तृतीयाध्यायस्य द्वितीयाह्निकम् ॥

॥समाप्तस्तृतीयोऽध्यायः ॥

# चतुर्थाध्यायस्य प्रथमाह्निकम्

## [ प्रवृत्तिदोषसामान्यपरीक्षाप्रकरणम् ]

[**वा** पृः ४२३; **टी** पृः ५५०; **प** पृः ४९९]

मनसोऽनन्तरं प्रवृत्तिः। सा परीक्षितव्या। तत्र खलु यावद् धर्माधर्माश्रयं शरीरादि परीक्षितम्, सर्वा सा प्रवृत्तेः परीक्षा इत्यत आह—

**प्रवृत्तिर्यथोक्ता ॥४।१।१॥**

तथा परीक्षितेति ॥१॥

[**वा** पृः४२३; **टी** पृः ५५०; **प** पृः ५००]

प्रवृत्त्यनन्तरास्तर्हि दोषाः परीक्ष्यन्तामित्यत आह—

**तथा दोषाः ॥४।१।२॥**

परीक्षिताः। बुद्धिसमानाश्रयत्वादात्मगुणाः। प्रवृत्तिहेतुत्वात् पुनर्भवप्रतिसन्धान-सामर्थ्याच्च संसारहेतवः। संसारस्यानादित्वादनादिना प्रबन्धेन प्रवर्तन्ते। मिथ्या-ज्ञाननिवृत्तिस्तत्त्वज्ञानात्। मिथ्याज्ञाननिवृत्तौ रागद्वेषप्रबन्धविच्छेदोऽपवर्ग इति। प्रादुर्भावतिरोभावधर्मका इत्येवमाद्युक्तं दोषाणामिति ॥२॥

॥प्रवृत्तिदोषसामान्यपरीक्षाप्रकरणम्॥

## [ दोषत्रैराश्यप्रकरणम् ]

[**वा** पृः ४२४; **टी** पृः ५५१; **प** पृः ५०१]

**प्रवर्तनालक्षणा दोषा [ १।१।१८ ]** इत्युक्तम्। तथा चेमे मानेर्ष्यासूयाविचिकित्सामत्सरादयः। ते कस्मान्नोपसंख्यायन्त इत्यत आह—

**तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात्॥४।१।३॥**

तेषां दोषाणां त्रयो राशयस्त्रयः पक्षाः। तत्र[१] रागपक्षः, कामो मत्सरः स्पृहा तृष्णा लोभ इति। द्वेषपक्षः, क्रोध ईर्ष्या असूया द्रोहोऽमर्ष इति। मोहपक्षो मिथ्याज्ञानं विचिकित्सा मानः प्रमाद इति। त्रैराश्यान्नोपसंख्यायन्त इति। लक्षणस्य तर्ह्यभेदात् त्रित्वमप्यनुपपन्नम्? नानुपपन्नम्, रागद्वेषमोहार्थान्तरभावात्, आसक्तिलक्षणो रागः, अमर्षलक्षणो द्वेषः, मिथ्याप्रतिपत्तिलक्षणो मोह इति। एतत् प्रत्यात्मवेदनीयं सर्वशरीरिणाम्। विजानात्ययं शरीरी रागमुत्पन्नम्—अस्ति मेऽध्यात्मं रागधर्म इति। विगतं च विजानाति—नास्ति मेऽध्यात्मं रागधर्म इति। एवमितरयोरपीति मानेर्ष्यासूयाप्रभृतयस्तु त्रैराश्यमनुपतिता इति नोपसंख्यायन्ते॥३॥

[**वा** पृः ४२६; **टी** पृः ५५२; **प** पृः ५०२]

**नैकप्रत्यनीकत्वात्॥४।१।४॥**

नार्थान्तरं रागादयः। कस्मात्? एकप्रत्यनीकभावात्। तत्त्वज्ञानं सम्यङ्मतिरार्यप्रज्ञा सम्बोध इत्येकमिदं प्रत्यनीकं त्रयाणामिति॥४॥

---

१. तत्र J only

[**वा** पृः ४२६; **टी** पृः ५५२; **प** पृः ५०२]

**व्यभिचारादहेतुः ॥४।१।५॥**

एकप्रत्यनीकाश्च पृथिव्यां श्यामादयोऽग्निसंयोगेनैकेन। एकयोनयश्च पाकजा इति॥५॥

[**वा** पृः ४२६; **टी** पृः ५५३; **प** पृः५०२]

सति चार्थान्तरभावे

**तेषां मोहः पापीयान् नामूढस्येतरोत्पत्तेः॥४।१।६॥**

मोहः पापः पापतरो वा द्वौ द्वावभिप्रेत्योक्तम्[१]। कस्मात्? नामूढस्येतरोत्पत्तेः। अमूढस्य रागद्वेषौ नोत्पद्येते, मूढस्य तु यथासङ्कल्पमुत्पत्तिः। विषयेषु रञ्जनीयाः संकल्पा रोगहेतवः। कोपनीयाः सङ्कल्पा द्वेषहेतवः। उभये च सङ्कल्पा न मिथ्याप्रतिपत्तिलक्षणत्वान्मोहादन्ये। ताविमौ मोहयोनी रागद्वेषाविति। तत्त्वज्ञानाच्च मोहनिवृत्तौ रागद्वेषानुत्पत्तिरित्येकप्रत्यनीकभावोपपत्तिः। एवं च कृत्वा तत्त्वज्ञानाद्

**दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये**
**तदनन्तरापायाद्[२] अपवर्गः [ १।१।२ ]**

इति व्याख्यातमिति॥६॥

---

१. पापीयान् for उक्तम् J  २. °राभावाद् C

[**वा** पृ: ४२७; **टी** पृ: ५५३; **प** पृ: ५०३]

प्रासस्तर्हि

**निमित्तनैमित्तिकभावादर्थान्तरभावो दोषेभ्यः॥४।१।७॥**

अन्यद्धि निमित्तमन्यच्च नैमित्तिकमिति दोषनिमित्तत्वाददोषो मोह इति॥७॥

[**वा** पृ: ४२७; **टी** पृ: ५५३; **प** पृ: ५०३]

**न, दोषलक्षणावरोधान्मोहस्य॥४।१।८॥**

**प्रवर्तनालक्षणा दोषा [ १।१।१८ ]**
इति दोषलक्षणेनावरुध्यते दोषेषु मोह इति॥८॥

[**वा** पृ: ४२७; **टी** पृ: ५५३; **प** पृ: ५०३]

**निमित्तनैमित्तिकोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः॥४।१।९॥**

द्रव्याणां गुणानां चानेकविधो विकल्पो निमित्तनैमित्तिकभावः तुल्यजातीयानां[१] दृष्ट इति॥९॥

॥दोषत्रैराश्यप्रकरणम्॥

---

१. भावे C

# [ प्रेत्यभावपरीक्षाप्रकरणम् ]

[**वा** पृः४२८; **टी** पृः ५५४; **प** पृः ५०३]

दोषानन्तरं प्रेत्यभावः। तस्यासिद्धिरात्मनो नित्यत्वात्[1]। न खलु नित्यं किञ्चिज्जायते म्रियते वेति जन्ममरणयोर्नित्यत्वादात्मनोऽनुपपत्तिः। उभयं च प्रेत्यभाव इति। तत्रायं सिद्धार्थानुवादः—

**आत्मनित्यत्वे प्रेत्यभावसिद्धिः॥४।१।१०॥**

नित्यः सन्नयमात्मा प्रैति पूर्वशरीरं जहाति म्रियत इति। प्रेत्य च पूर्वशरीरं हित्वा भवति जायते शरीरान्तरमुपादत्त इति। तच्चैतदुभयं **पुनरुत्पत्तिः प्रेत्यभावः [ १।१।१९ ]** इत्यत्रोक्तम्। पूर्वशरीरं हित्वा शरीरान्तरोपादानं प्रेत्यभाव इति। तच्चैतन्नित्यत्वे सम्भवतीति। यस्य तु सत्त्वोत्पादः सत्त्वनिरोधश्च प्रेत्यभावस्तस्य कृतहानमकृताभ्यागमश्च दोषः। उच्छेदहेतुवादे ऋष्युपदेशाश्चानर्थका इति॥१०॥

[**वा** पृः ४२८; **टी** पृः ५५४; **प** पृः ५०४]

कथमुत्पत्तिरिति चेत्?

**व्यक्ताद् व्यक्तानां प्रत्यक्षप्रामाण्यात्॥४।१।११॥**

केन प्रकारेण किंधर्मकात् कारणात् व्यक्तं शरीराद्युत्पद्यत इति? व्यक्ताद्भूतसमाख्यातात् पृथिव्यादेः परमसूक्ष्मान्नित्याद् व्यक्तं शरीरेन्द्रियविषयोपकरणाधारं प्रज्ञातं द्रव्यमुत्पद्यते। व्यक्तं च खल्विन्द्रियग्राह्यं तत्सामान्यात् कारणमपि व्यक्तम्।

---

१. आत्मनो नित्यत्वात् Om J

किं सामान्यम्? रूपादिगुणयोगः। रूपादिगुणयुक्तेभ्यः पृथिव्यादिभ्यो नित्येभ्यो रूपादिगुणयुक्तं शरीराद्युत्पद्यते प्रत्यक्षप्रामाण्यात्—दृष्टा हि रूपादिगुणयुक्तेभ्यो मृत्प्रभृतिभ्यस्तथाभूतस्य द्रव्यस्योत्पत्तिः, दृष्टेन चादृष्टस्यानुमानमिति। रूपादीनामन्वयदर्शनात् प्रकृतिविकारयोः पृथिव्यादीनां नित्यानामतीन्द्रियाणां कारणभावोऽनुमीयत इति॥११॥

[**वा** पृः ४२९; **टी** पृः ५५५; **प** पृः ५०५]

## न, घटाद् घटानिष्पत्तेः ॥४।१।१२॥

इदमपि प्रत्यक्षम्, न खलु व्यक्ताद् घटाद् व्यक्तो घट उत्पद्यमानो दृश्यत इति। व्यक्ताद् व्यक्तस्यानुत्पत्तिदर्शनान्न व्यक्तं कारणमिति॥१२॥

[**वा** पृः ४२९; **टी** पृः ५५५; **प** पृः ५०५]

## व्यक्ताद् घटनिष्पत्तेरप्रतिषेधः॥४।१।१३॥

न ब्रूमः सर्वं सर्वस्य कारणमिति। किं तर्हि? ब्रूमः[१]। यदुत्पद्यते व्यक्तं द्रव्यं तत् तथाभूतादेवोत्पद्यत इति। व्यक्तं च तन्मृद्द्रव्यं कपालसंज्ञकं यतो घट उत्पद्यते। न चैतन्निह्नुवानः कुतश्चिदभ्यनुज्ञानं लब्धुमर्हतीति। तदेतत् तत्त्वम्॥१३॥

॥प्रेत्यभावपरीक्षाप्रकरणम्॥

---

१. किंतु for किं तर्हिः ब्रूमः C

# [ शून्यतोपादानताप्रकरणम् ]

[**वा** पृ:४३०; **टी** पृ: ५५५; **प** पृ: ५०५]

अतः परं **प्रावादुकानां** दृष्टयः प्रदर्श्यन्ते—

**अभावाद्भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात् ॥४।१।१४॥**

असतः सदुत्पद्यत इत्ययं पक्षः। कस्मात्? उपमृद्यत प्रादुर्भावात् उपमृद्य बीजमङ्कुर उत्पद्यते, नानुपमृद्य। न चेद् बीजोपमर्दोऽङ्कुरकारणम्, अनुपमर्देऽपि बीजस्याङ्कुरोत्पत्तिः स्यादिति॥१४॥

[**वा** पृ: ४३०; **टी** पृ: ५५५; **प** पृ: ५०६]

अत्राभिधीयते—

**व्याघातादप्रयोगः ॥४।१।१५॥**

उपमृद्य प्रादुर्भावादित्ययुक्तः प्रयोगो व्याघातात्। यदुपमृद्नाति न तदुपमृद्य प्रादुर्भवतीति, विद्यमानत्वात्। यच्च प्रादुर्भवति न तेनाप्रादुर्भूतेनाविद्यमानेनोपमर्द इति॥१५॥

[**वा** पृ: ४३०; **टी** पृ: ५५६; **प** पृ: ५०६]

**नातीतानागतयोः कारकशब्दप्रयोगात्॥४।१।१६॥**

अतीते चानागते चाविद्यमाने कारकशब्दाः प्रयुज्यन्ते। पुत्रो जनिष्यते, जनिष्यमाणं पुत्रमभिनन्दति, पुत्रस्य जनिष्यमाणस्य नाम करोति। अभूत् कुम्भः, भिन्नं कुम्भमनुशोचति, भिन्नस्य कुम्भस्य कपालानि, अजाताः पुत्राः स्थविरं पितरं तापयन्तीति च बहुलं भाक्ताः प्रयोगा दृश्यन्ते। का पुनरियं भक्तिः? आनन्तर्यं भक्तिः[१]। आनन्तर्यसामर्थ्यादुपमृद्य प्रादुर्भावार्थ इति। प्रादुर्भविष्यन्नङ्कुर उपमृद्नातीति भाक्तं कर्तृत्वमिति॥१६॥

[वा पृः ४३१; टी पृः ५५७; प पृः ५०७]

**न, विनष्टेभ्योऽनिष्पत्तेः॥४।१।१७॥**

न विनष्टाद् बीजादङ्कुर उत्पद्यत इति। तस्मान्नाभावाद् भावोत्पत्तिरिति ॥१७॥

[वा पृः ४३१; टी पृः ५५७; प पृः ५०७]

**क्रमनिर्देशादप्रतिषेधः॥४।१।१८॥**

उपमर्दप्रादुर्भावयोः पौर्वापर्यनियमः क्रमः। स खलु हेतुरभावाद् भावोत्पत्तौ निर्दिश्यते। स च न प्रतिषिध्यत इति। व्याहतव्यूहानामवयवानां पूर्वव्यूहनिवृत्तौ व्यूहान्तराद् द्रव्यनिष्पत्तिर्नाभावात्। बीजावयवाः कुतश्चिन्निमित्तात् प्रादुर्भूतक्रियाः पूर्वव्यूहं जहति। व्यूहान्तरं चापद्यन्ते। व्यूहान्तरादङ्कुरोत्पत्तिः। दृश्यन्ते खलु

१. आन...भक्तिः। Om J

अवयवास्तत्संयोगाश्चाङ्कुरोत्पत्तिहेतवः। न चानिवृत्ते पूर्वव्यूहे बीजावयवानां शक्यं व्यूहान्तरेण भवितुमित्युपमर्दप्रादुर्भावयोः पौर्वापर्यनियमः क्रमः। तस्मान्नाभावाद् भावोत्पत्तिरिति। न चान्यत् बीजावयवेभ्योऽङ्कुरोत्पत्तिकारणमित्युपपद्यते बीजोपादाननियम इति ॥१८॥

॥शून्यतोपादानताप्रकरणम्॥

# [ ईश्वरोपादानताप्रकरणम् ]

[**वा** पृः ४३२; **टी** पृः ५५८; **प** पृः ५०९]

अ**थापर** आह—

## ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात् ॥४।१।१९॥

पुरुषोऽयं समीहमानो नावश्यं समीहाफलं आराध्नोति[1]। तेनानुमीयते पराधीनं पुरुषस्य कर्मफलाराधनमिति। यदधीनं स ईश्वरः। तस्मादीश्वरः कारणमिति ॥१९॥

[**वा** पृः ४३२; **टी** पृः ५५९; **प** पृः ५१०]

## न, पुरुषकर्माभावे फलानिष्पत्तेः॥४।१।२०॥

ईश्वराधीना चेत् फलनिष्पत्तिः स्याद् अपि तर्हि पुरुषस्य समीहामन्तरेण फलं निष्पद्येतेति॥२०॥

---

१. प्राप्नोति TC

[**वा** पृः ४३२; **टी** पृः ५५९; **प** पृः ५११]

**तत्कारितत्वादहेतुः ॥४।१।२१॥**

पुरुषकारमीश्वरोऽनुगृह्णाति। फलाय पुरुषस्य यतमानस्येश्वरः फलं सम्पादयतीति। यदा न सम्पादयति, तदा पुरुषकर्माफलं भवतीति। तस्माद् ईश्वरकारितत्वात् पुरुषकारः फलोत्पत्त्यहेतुः[१], पुरुषकर्माभावे फलानिष्पत्तेरिति।

गुणविशिष्टमात्मान्तरमीश्वरः। तस्यात्मकल्पात् कल्पान्तरानुपपत्तिः। अधर्ममिथ्याज्ञानप्रमादहान्या धर्मज्ञानसमाधिसम्पदा च विशिष्टमात्मान्तरमीश्वरः। तस्य च धर्मसमाधिफलम् अणिमाद्यष्टविधमैश्वर्यम्। सङ्कल्पानुविधायी चास्य धर्मः प्रत्यात्मवृत्तीन् धर्माधर्मसंनिचयान् पृथिव्यादीनि च भूतानि प्रवर्तयति। एवं च स्वकृताभ्यागमस्यालोपेन निर्माणप्राकाम्यमीश्वरस्य स्वकृतकर्मफलं वेदितव्यम्। आप्तकल्पश्चायम्। यथा पितापत्यानां तथा पितृभूत ईश्वरो भूतानाम्। न चात्मकल्पादन्यः कल्पः संभवति। न तावदस्य बुद्धिमन्तरेण कश्चिद् धर्मो लिङ्गभूतः शक्य उपपादयितुम्। आगमाच्च द्रष्टा बोद्धा सर्वज्ञ ईश्वर इति। बुद्ध्यादिभिश्चात्मलिङ्गैर्निरुपाख्यमीश्वरं प्रत्यक्षानुमानागमविषयातीतं कः शक्त उपपादयितुम्? स्वकृताभ्यागमलोपेन च प्रवर्तमानस्यास्य यदुक्तं प्रतिषेधजातमकर्मनिमित्ते शरीरसर्गे तत्सर्वं प्रसज्यत इति॥२१॥

॥ईश्वरोपादानताप्रकरणम्॥

---

१. अहेतुः for पुरुषकारः फलोत्पत्त्यहेतुः TC

# [ आकस्मिकत्वप्रकरणम् ]

[**वा** पृः ४४१; **टी** पृः ५६९; **प** पृः ५१८]

**अपर** इदानीमाह—

## अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात्॥४।१।२२॥

अनिमित्ता शरीराद्युत्पत्तिः। कस्मात्? कण्टकतैक्ष्ण्यादिदर्शनात्। कण्टकस्य तैक्ष्ण्यम्, पर्वतधातूनां चित्रता, ग्राव्णां श्लक्ष्णता इति। निर्निमित्तं चोपादानवच्च दृष्टम्। तथा शरीरादिसर्गोऽपीति॥२२॥

[**वा** पृः४४२; **टी** पृः ५७०; **प** पृः ५१९]

## अनिमित्तनिमित्तत्वान्नानिमित्ततः॥४।१।२३॥

अनिमित्ततो भावोत्पत्तिरित्युच्यते। यतश्चोत्पद्यते तन्निमित्तम्। अनिमित्तस्य निमित्तत्वान्नानिमित्ता भावोत्पत्तिरिति॥२३॥

[**वा** पृः ४४२; **टी** पृः ५७०; **प** पृः ५१९]

## निमित्तानिमित्तयोरर्थान्तरभावादप्रतिषेधः॥४।१।२४॥

अन्यद्धि निमित्तम्। अन्यच्च निमित्तप्रत्याख्यानम्। न च प्रत्याख्यानमेव प्रत्याख्येयम्। यथानुदकः कमण्डलुरिति नोदकप्रतिषेधः उदकं भवतीति। स

खल्वयं वादोऽकर्मनिमित्तः शरीरादिसर्ग इत्येतस्मान्न भिद्यत इति अभेदात् तत्प्रतिषेधेनैव प्रतिषिद्धो वेदितव्य इति ॥२४॥

॥आकस्मिकत्वप्रकरणम्॥

## [ सर्वानित्यत्वनिराकरणप्रकरणम् ]

[**वा** पृः ४४३; **टी** पः ५७१; **प** पृः ५१९]

**अन्ये** तु मन्यन्ते—

**सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात्॥४।१।२५॥**

किमनित्यं नाम? यस्य कदाचिद् भावस्तदनित्यम्। उत्पत्तिधर्मकमनुत्पन्नं नास्ति, विनाशधर्मकं च विनष्टं नास्ति। किं पुनः सर्वम्? भौतिकं च शरीरादि, अभौतिकं च बुद्ध्यादि। तदुभयमुत्पत्तिविनाशधर्मकं विज्ञायते। तस्मात् तत्सर्वमनित्यमिति॥२५॥

[**वा** पृः ४४४; **टी** पृः ५७१; **प** पृः ५२०]

**नानित्यतानित्यत्वात्॥४।१।२६॥**

यदि तावत् सर्वस्यानित्यता नित्या, तस्या नित्यत्वान्न सर्वमनित्यम्। अथानित्या? तस्यामविद्यमानायां सर्वं नित्यमिति॥२६॥

[**वा** पृः ४४४; **टी** पृः ५७२; **प** पृः ५२१]

**तदनित्यत्वमग्नेर्दाह्यं विनाश्यानुविनाशवत्॥४।१।२७॥**

तस्या अनित्यताया अप्यनित्यत्वम्। कथम्? यथाग्निर्दाह्यं विनाश्यानुविनश्यति, एवं सर्वस्यानित्यता सर्वं विनाश्यानुविनश्यतीति॥२७॥

[**वा** पृः ४४४; **टी** पृः ५७२; **प** पृः ५२१]

**नित्यस्याप्रत्याख्यानं यथोपलब्धि व्यवस्थानात् ॥४।१।२८॥**

अयं खलु वादो नित्यं प्रत्याचष्टे। नित्यस्य च प्रत्याख्यानमनुपपन्नम्। कस्मात्? यथोपलब्धिव्यवस्थानात्। यस्योत्पत्तिविनाशधर्मकत्वमुपलभ्यते प्रमाणतस्तदनित्यम्। यस्य नोपलभ्यते तद्विपरीतम्। न च परमसूक्ष्माणां भूतानामाकाशकालदिगात्ममनसां[१] तद्गुणानां च केषाञ्चित् सामान्यविशेषसमवायानां चोत्पत्तिविनाशधर्मकत्वं प्रमाणत उपलभ्यते। तस्मान्नित्यान्येतानीति॥२८॥

॥सर्वानित्यत्वनिराकरणप्रकरणम्॥

## [ सर्वनित्यत्वनिराकरणप्रकरणम् ]

[**वा** पृः ४४५; **टी** पृः ५७२; **प** पृः ५२१]

अय**मन्य एकान्तः**—

**सर्वं नित्यं पञ्चभूतनित्यत्वात् ॥४।१।२९॥**

१. °काशमनसामात्मनां च J

भूतमात्रमिदं सर्वम्। तानि च नित्यानि भूतोच्छेदानुपपत्तेरिति॥२९॥

[**वा** पृ: ४४५; **टी** पृ: ५७३; **प** पृ: ५२२]

**नोत्पत्तिविनाशकारणोपलब्धेः॥४।१।३०॥**

उत्पत्तिकारणं चोपलभ्यते। विनाशकारणं च। तत् सर्वनित्यत्वे व्याहन्यत इति॥३०॥

[**वा** पृ: ४४५; **टी** पृ: ५७३; **प** पृ: ५२२]

**तल्लक्षणावरोधादप्रतिषेधः॥४।१।३१॥**

यस्योत्पत्तिविनाशकारणमुपलभ्यत इति मन्यसे, न तद् भूतलक्षणहीनमर्थान्तरं गृह्यते। भूतलक्षणावरोधाद् भूतमात्रमिदमित्ययुक्तोऽयं प्रतिषेध इति॥३१॥

[**वा** पृ: ४४६; **टी** पृ: ५७३; **प** पृ: ५२२]

**नोत्पत्तितत्कारणोपलब्धेः॥४।१।३२॥**

कारणसमानगुणस्योत्पत्तिरुत्पत्तिकारणं[१] चोपलभ्यते।

न चैतदुभयं नित्यविषयम्। न चोत्पत्तितत्कारणोपलब्धिः शक्या प्रत्याख्यातुम्।

---

१. कारणं for उत्पत्तिकारणं C

न चाविषया काचिदुपलब्धिः। उपलब्धिसामर्थ्यात् कारणेन समानगुणं कार्यमुत्पद्यत इत्यनुमीयते। स खलूपलब्धेर्विषय इति। एवं च तल्लक्षणावरोधोपपत्तिरिति।

उत्पत्तिविनाशकारणप्रयुक्तस्य ज्ञातुः प्रयत्नो दृष्ट इति। प्रसिद्धश्चावयवी तद्धर्मा। उत्पत्तिविनाशधर्मा चावयवी प्रसिद्ध इति।

शब्दकर्मबुद्ध्यादीनां चाव्याप्तिः पञ्चभूतनित्यत्वात् [द्रः ४।१।३१] तल्लक्षणावरोधात् [द्रः ४।१।२९] च इत्यनेन शब्दकर्मबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाश्च न व्याप्ताः। तस्मादनेकान्तः।

स्वप्नविषयाभिमानवन्मिथ्योपलब्धिरिति चेत्? भूतोपलब्धौ तुल्यम्। यथा स्वप्ने विषयाभिमान एवमुत्पत्तिकारणाभिमान इति। एवं चैतद्[१] भूतोपलब्धौ तुल्यम्। पृथिव्याद्युपलब्धिरपि स्वप्नविषयाभिमानवत् प्रसज्यते।

पृथिव्याद्यभावे सर्वव्यवहारविलोप इति चेत्? तदितरत्र समानम्। उत्पत्तिविनाशकारणोपलब्धिविषयस्याप्यभावे सर्वव्यवहारविलोप इति सोऽयं नित्यानामतीन्द्रियत्वादविषयत्वाच्चोत्पत्तिविनाशयोः स्वप्नविषयाभिमानवदित्यहेतुरिति ॥३२॥

[**वा** पृः ४४८; **टी** पृः ५७४; **प** पृः ५२२]

अवस्थितस्योपादानस्य धर्ममात्रं निवर्तते धर्ममात्रमुपजायत इति। स खलूत्पत्तिविनाशयोर्विषयः। यच्चोपजायते तत्प्रागप्युपजनादस्ति। यच्च निवर्तते तन्निवृत्तमप्यस्तीति। एवं च सर्वस्य नित्यत्वमिति।

**न, व्यवस्थानुपपत्तेः ॥४।१।३३॥**

अयमुपजन इयं निवृत्तिरिति व्यवस्था नोपपद्यते, उपजातनिवृत्तयोर्विद्य-

१. चेन्मन्यसे for चैतद् TC

मानत्वात्। अयं धर्म उपजातोऽयं निवृत्त इति सद्भावाविशेषादव्यवस्था, इदानीमुपजननिवृत्ती नेदानीमिति च कालव्यवस्थानुपपत्तिः[१] सर्वस्य[२] सर्वदा विद्यमानत्वात्। अस्य [३]धर्मस्योपजननिवृत्ती नास्येति च [४]व्यवस्थानुपपत्तिः, उभयोरविशेषात्। अनागतोऽतीत इति च कालव्यवस्थानुपपत्तिः, [५]वर्तमानस्य सद्भावलक्षणत्वात्। अविद्यमानस्यात्मलाभ उपजनो विद्यमानस्यात्महानं निवृत्तिरित्येतस्मिन् पक्षे नैते दोषाः। तस्माद् यदुक्तं प्रागप्युपजनादस्ति, निवृत्तं चास्ति तदयुक्तमिति॥३३॥

॥सर्वनित्यत्वनिराकरणप्रकरणम्॥

## [ सर्वपृथक्त्वनिराकरणप्रकरणम् ]

[**वा** पृः ४४८; **टी** पृः ५७५; **प** पृः ५२३]

अयम**न्य एकान्तवादः**—

**सर्वं पृथग् भावलक्षणपृथक्त्वात्॥४।१।३४॥**

सर्वं नाना। न कश्चिदेको भावो विद्यते। कस्मात्? भावलक्षणपृथक्त्वात्। भावस्य लक्षणमभिधानम्, येन येन लक्ष्यते भावः स समाख्याशब्दः, तस्य पृथग्विषयत्वात्। सर्वो भावसमाख्याशब्दः समूहवाची। कुम्भ इति संज्ञाशब्दो गन्धरसरूपस्पर्शसमूहे बुध्नपार्श्वग्रीवादिसमूहे[६] च वर्तते। निदर्शनमात्रं चेदमिति॥३४॥

[**वा** पृः ४४९; **टी** पृः ५७५; **प** पृः ५२३]

**नानेकलक्षणैरेकभावनिष्पत्तेः॥४।१।३५॥**

---

१. नोपपद्यते for अनुपपत्तिः C २. सर्वस्य J only ३. द्रव्यस्य धर्मौ उपजन० J
४. द्रव्यव्यवस्था० J ५. वर्तमानस्य कालस्य अर्थसद्भाव० J ६. ०ग्रीवौष्ठसमूहे J

अनेकविधलक्षणैरिति मध्यमपदलोपी समासः। गन्धादिभिश्च गुणैर्बुध्नादिभिश्चावयवैः सम्बद्ध एको भावो निष्पद्यते। गुणव्यतिरिक्तं च द्रव्यम्। अवयवातिरिक्तश्चावयवीति। विभक्तन्यायं चैतदुभयमिति॥३५॥

[**वा** पृः ४५०; **टी** पृः ५७६; **प** पृः ५२३]

अथापि—

**लक्षणव्यवस्थानादेवाप्रतिषेधः॥४।१।३६॥**

न कश्चिदेको भाव इत्ययुक्तः प्रतिषेधः। कस्मात्? लक्षणव्यवस्थानादेव। यदिदं लक्षणं भावस्य संज्ञाशब्दभूतं तदेकस्मिन् व्यवस्थितम्। यं कुम्भमद्राक्षं तं स्पृशामि यं चास्प्राक्षं तं पश्यामीति नाणुसमूहो गृह्यत इति। अणुसमूहे चागृह्यमाणे यद् गृह्यते तदेकमेवेति।

अथाप्येतदनूक्तम्, नास्त्येको भावो यस्मात् समुदायः। एकानुपपत्तेर्नास्त्येव समूहः। नास्त्येको भावो यस्मात् समूहे भावशब्दप्रयोगः। एकस्य चानुपपत्तेः समूहो नोपपद्यत इति। एकसमुच्चयो हि समूहः। व्याहतत्वादनुपपन्नं नास्त्येको भाव इति। यस्य प्रतिषेधः प्रतिज्ञायते, समूहे भावशब्दप्रयोगादिति हेतुं ब्रुवता स एवाभ्यनुज्ञायते। एकसमुच्चयो हि समूह इति। समूहे भावशब्दप्रयोगादिति च समूहमाश्रित्य प्रत्येकं समूहिप्रतिषेधो नास्त्येको भाव इति। सोऽयमुभयतो व्याघाताद् यत्किञ्चनवाद इति॥३६॥

॥सर्वपृथक्त्वनिराकरणप्रकरणम्॥

## [ सर्वशून्यतानिराकरणप्रकरणम् ]

[**वा** पृ: ४५१; **टी** पृ: ५७७; **प** पृ: ५२४]

अयम**पर एकान्तवाद**:—

**सर्वमभावो भावेष्वितरेतराभावसिद्धेः ॥४।१।३७॥**

यावद्भावजातं तत्सर्वमभावः। कस्मात्? भावेष्वितरेतराभावसिद्धेः। असन् गौरश्वात्मना, अनश्वो गौः असन्नश्वो गवात्मना, अगौरश्व इत्यसत्प्रत्ययस्य प्रतिषेधस्य च भावशब्देन सामानाधिकरण्यात् सर्वमभाव इति ॥३७॥

[**वा** पृ:४५१; **टी** पृ: ५७८; **प** पृ: ५२४]

सर्वमभाव इति[१] प्रतिज्ञावाक्ये पदयोः प्रतिज्ञाहेत्वोश्च व्याघातादयुक्तम्। अनेकस्याशेषता सर्वशब्दस्यार्थः। भावप्रतिषेधश्चाभावशब्दस्यार्थः। पूर्वं सोपाख्यम्, उत्तरं च निरुपाख्यम्। तत्र सर्वमुपाख्यायमानं कथं निरुपाख्यमभावः स्यादिति? न जात्वभावो निरुपाख्योऽनेकतया वा, अशेषतया वा शक्यः प्रतिज्ञातुमिति। सर्वमेतदभाव इति चेत्? यत् सर्वमिति मन्यसे अभावः स इति। एवं चेदनिवृत्तो व्याघातः। अनेकमशेषं चेति नाभावे प्रत्ययेन शक्यं भवितुम्। अस्ति चायं प्रत्ययः सर्वमिति। तस्मान्नाभाव इति।

प्रतिज्ञाहेत्वोश्च व्याघातः। सर्वमभाव इति भावप्रतिषेधः प्रतिज्ञा। भावेष्वितरेतराभावसिद्धेरिति हेतुः। भावेष्वितरेतराभावमनुज्ञायाश्रित्य चेतरेतराभावसिद्ध्या सर्वमभाव इत्युच्यते। यदि सर्वमभावो भावेष्वितरेतराभावसिद्धिर्नोपपद्यते। अथ भावेष्वितरेतराभावसिद्धिः सर्वमभाव इति नोपपद्यते।

---

१. सर्व....इति J only

सूत्रेण चाभिसम्बन्धः—

## न, स्वभावसिद्धेर्भावानाम्॥४।१।३८॥

न सर्वमभावः। कस्मात्? स्वेन भावेन सद्भावाद् भावानाम् स्वेन धर्मेण भावा भवन्तीति प्रतिज्ञायते। कश्च स्वो धर्मो भावानाम्? **द्रव्यगुणकर्मणां सदादिसामान्यम् [ वै. सू. ( च ) १।१।७ ]। द्रव्याणां क्रियावद् [ वै. सू. ( च ) १।१।१४ ]** इत्येवमादिर्विशेषः, **स्पर्शपर्यन्ताः पृथिव्याः [ ३।१।६१ ]** इति च, प्रत्येकं चानन्तो भेदः, सामान्यविशेषसमवायानां च विशिष्टा धर्मा गृह्यन्ते। सोऽयमभावस्य निरुपाख्यत्वात् सदादिसंप्रत्यायकोऽर्थभेदो न स्यात्। अस्ति त्वयम्। तस्मान्न सर्वमभाव इति।

अथवा न स्वभावसिद्धेर्भावानामिति स्वरूपसिद्धेरिति। गौरिति प्रयुज्यमाने शब्दे जातिविशिष्टं द्रव्यं गृह्यते, नाभावमात्रम्, यदि च सर्वमभावः गौरित्यभावः प्रतीयेत, गोशब्देन चाभाव उच्येत। यस्मात् तु गोशब्दप्रयोगे द्रव्यविशेषः प्रतीयते नाभावः, तस्मादयुक्तमिति।

अथवा न स्वभावसिद्धेरिति। असन् गौरश्वात्मनेत्युच्यते। असन् गौ[१]र्गवात्मना कस्मान्नोच्यते? अवचनाद् गवात्मना गौरस्तीति स्वभावसिद्धिः। अनश्वोऽश्व इति वा गौरगौरिति वा कस्मान्नोच्यते? अवचनात् स्वेन रूपेण विद्यमानता द्रव्यस्येति विज्ञायते।

अव्यतिरेकप्रतिषेधे च भावेनासत्प्रत्ययसामानाधिकरण्यम्। [२]संयोगादिसम्बन्धो व्यतिरेकः। अत्राव्यतिरेकोऽभेदाख्यसम्बन्धः। तत्प्रतिषेधे सदा चासत्प्रत्ययसामानाधिकरण्यम्। यथा न सन्ति कुण्डे बदराणीति। असन् गौरश्वात्मना, अनश्वो गौरिति च गवाश्वयोरव्यतिरेकः प्रतिषिध्यते, गवाश्वयोरेकत्वं नास्तीति। तस्मिंश्च

---

१. उच्यते। असन् गौः J only २. भावे संयो॰ C

प्रतिषिध्यमाने भावेन गवा सामानाधिकरण्यमसत्प्रत्ययस्य असन् गौरश्वात्मनेति, यथा न सन्ति कुण्डे बदराणीति कुण्डबदरसंयोगे प्रतिषिध्यमाने सद्भिरेवासत्प्रत्ययस्य सामानाधिकरण्यमिति ॥३८ ॥

[**वा** पृः ४५३; **टी** पृः ५७९; **प** पृः ५२५]

**न स्वभावसिद्धिरापेक्षिकत्वात् ॥४।१।३९॥**

अपेक्षाकृतमापेक्षिकम्। ह्रस्वापेक्षाकृतं दीर्घम् दीर्घापेक्षाकृतं च ह्रस्वम् न स्वेनात्मनावस्थितं किञ्चित्। कस्मात्? अपेक्षासामर्थ्यात्। तस्मान्न स्वभावसिद्धिर्भावानाम् ॥३९ ॥

[**वा** पृः ४५३; **टी** पृः ५७९; **प** पृः ५२६]

**व्याहतत्वादयुक्तम् ॥४।१।४०॥**

यदि ह्रस्वापेक्षाकृतं दीर्घम्, ह्रस्वमनापेक्षिकम्। किमिदानीमपेक्ष्य ह्रस्वमिति गृह्यते? अथ दीर्घापेक्षाकृतं ह्रस्वम्, दीर्घमनापेक्षिकम्, किमिदानीमपेक्ष्य दीर्घमिति गृह्यते[१]? एवमितरेतराश्रययोरेकाभावेऽन्यतराभावादुभयाभाव इत्यपेक्षाव्यवस्थानुपपन्ना।

स्वभावसिद्धावसत्यां समयोः परिमण्डलयोर्वा द्रव्ययोरापेक्षिके दीर्घत्वह्रस्वत्वे कस्मान्न भवतः? अपेक्षायामनपेक्षायां च द्रव्ययोरभेदः। यावती द्रव्ये परस्परम-

---

१. किमिदानी...गृह्यते? J only

पेक्षमाणे[१] तावती एवानपेक्षमाणे नान्यतरत्र भेदः। आपेक्षिकत्वे तु सति अन्यतरत्र विशेषोपजनः[२] स्यादिति।

किमपेक्षासामर्थ्यमिति चेत्? द्वयोर्ग्रहणेऽतिशयग्रहणोपपत्तिः। द्वे द्रव्ये पश्यन्नेकत्र विद्यमानमतिशयं गृह्णाति तद्दीर्घतरमिति[३]। यत्र चातिशयं गृह्णाति तद्दीर्घमिति[४] व्यवस्यति। यच्च हीनं गृह्णाति तद् ह्रस्वमिति व्यवस्यतीति। एतदपेक्षासामर्थ्यमिति॥४०॥

॥सर्वशून्यतानिराकरणप्रकरणम्॥

# [ सङ्ख्यैकान्तवादनिराकरणप्रकरणम् ]

[**वा** पृ:४५४; **टी** पृ: ५८०; **प** पृ: ५२७]

अथेमे **सङ्ख्यैकान्तवादाः**। सर्वमेकं सदविशेषात्। सर्वं द्वैतं नित्यानित्यभेदात्। सर्वं त्रिधा ज्ञाता ज्ञानं ज्ञेयमिति। सर्वं चतुर्धा प्रमाता प्रमाणं प्रमेयं प्रमितिरिति। एवं यथासम्भवमन्येऽपीति। तत्र परीक्षा—

**सङ्ख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम् ॥४।१।४१॥**

यदि साध्यसाधनयोर्नानात्वम्, एकान्तो न सिध्यति, व्यतिरेकात्। अथ साध्यसाधनयोरभेदः, एवमप्येकान्तो न सिध्यति, साधनाभावात्। न हि हेतुमन्तरेण कस्यचित् सिद्धिरिति॥४१॥

[**वा** पृः ४५५; **टी** पृः ५८४; **प** पृः ५२८]

**न, कारणावयवभावात् ॥४।१।४२॥**

१. परस्परम् J only  २. धर्मोपजनः J  ३. दीर्घतरम् for दीर्घम् J
४. यत्र..तद्दीर्घमिति Om C

न सङ्ख्यैकान्तानामसिद्धिः। कस्मात्? कारणस्यावयवभावात्। [१]एकत्वस्यावयवः कश्चित् साधनभूत इत्यव्यतिरेकः। एवं द्वैतादिष्वपीति ॥४२॥

[**वा** पृः ४५५; **टी** पृः ५८४; **प** पृः ५२९]

**निरवयवत्वादहेतुः ॥४।१।४३॥**

कारणस्यावयवभावादित्यहेतुः। कस्मात्? सर्वमेकमित्यनपवर्गेण प्रतिज्ञाय कस्यचिदेकत्वावयवस्य साधनत्वमुच्यते[२]। तत्र व्यपवृक्तोऽवयवः साधनभूतो नोपपद्यते। एवं द्वैतादिष्वपीति।

ते खल्विमे सङ्ख्यैकान्ता यदि विशेषकारितस्यार्थभेदविस्तरस्य प्रत्याख्यानेन वर्तन्ते, प्रत्यक्षानुमानागमविरोधान्मिथ्यावादा भवन्तीति। अथाभ्यनुज्ञानेन वर्तन्ते? समानधर्मकारितोऽर्थसंग्रहो विशेषकारितश्चार्थभेद इति? एवमेकान्तत्वं जहतीति। ते खल्विमे तत्त्वज्ञानप्रविवेकार्थमेकान्ताः परीक्षिता इति ॥४३॥

॥सङ्ख्यैकान्तवादनिराकरणप्रकरणम्॥

## [ फलपरीक्षाप्रकरणम् ]

[**वा** पृः ४५६; **टी** पृः ५८५; **प** पृः ५२९]

परीक्षितः प्रेत्यभावः[३] प्रेत्यभावानन्तरं फलम्, तस्मिन्—

**सद्यः कालान्तरे च फलनिष्पत्तेः संशयः ॥४।१।४४॥**

---

१. एकत्वस्य J only २. एकत्वमुच्यते for एकत्वा...मुच्यते TC ३. परी...भावः। J only

पचति दोग्धीति सद्यः फलमोदनपयसी, कर्षति वपतीति कालान्तरे फलं शस्याधिगमः। अस्ति चेयं क्रिया अग्निहोत्रं जुहूयात् स्वर्गकाम इति। एतस्याः फले संशयः॥४४॥

[**वा** पृः ४५६; **टी** पृः ५८६; **प** पृः ५३०]

**न सद्यः कालान्तरोपभोग्यत्वात् ॥४।१।४५॥**

स्वर्गः फलं श्रूयते। स च भिन्नेऽस्मिन् देहे परं देहभेदादुत्पद्यत इति। न सद्यः, यथा ग्रामादिकामानामारम्भफलमिति॥४५॥

[**वा** पृः ४५७; **टी** पृः ५८७; **प** पृः ५३०]

**कालान्तरेणानिष्पत्तिर्हेतुविनाशात् ॥४।१।४६॥**

प्रध्वस्तायां प्रवृत्तौ प्रवृत्तिफलं न कारणमन्तरेणोत्पत्तुमर्हति। न खलु वै विनष्टात् कारणात् किञ्चिदुत्पद्यत इति॥४६॥

[**वा** पृः ४५७; **टी** पृः ५८७; **प** पृः ५३०]

**प्राङ्निष्पत्तेर्वृक्षफलवत् तत् स्यात् ॥४।१।४७॥**

यथा फलार्थिना वृक्षमूलसेकादि परिकर्म क्रियते, तस्मिंश्च प्रध्वस्ते पृथिवी-धातुरद्भिः संगृहीतः आन्तरेण तेजसा पच्यमानो रसद्रव्यं निर्वर्तयति। स द्रव्यभूतो

रसो वृक्षानुगतः पाकविशिष्टो व्यूहविशेषे सन्निविशमानः पर्णादिकं फलं निर्वर्तयति। एवं परिषेकादिकर्म चार्थवत्। न च विनष्टात् कारणात्[1] फलनिष्पत्तिः। तथा प्रवृत्त्या संस्कारो धर्माधर्मलक्षणो जन्यते, स जातो निमित्तान्तरानुगृहीतः कालान्तरेण फलं निष्पादयतीति। उक्तं चैतत्—

**पूर्वकृतफलानुबन्धात् तदुत्पत्तिः [ ३।२।६० ]**

इति ॥४७॥

[**वा** पृः ४५७; **टी** पृः ५८७; **प** पृः ५३१]

तदिदं प्राङ्निष्पत्तेर्निष्पद्यमानम्—

**नासन्न सन्न सदसत् सदसतोर्वैधर्म्यात्॥४।१।४८॥**

प्राङ्निष्पत्तेर्निष्पत्तिधर्मकं नासत् उपादाननियमात्। कस्यचिदुत्पत्तये[2] किञ्चिदुपादेयम्, न सर्वं सर्वस्येत्यसद्भावे समाने कारणनियमो[3] नोपपद्यत इति। न सत्, [4]प्रागुत्पत्तेर्विद्यमानस्योत्पत्तिरनुपपन्नेति। न सदसत्, सदसतोर्वैधर्म्यात्। सदित्यर्थाभ्यनुज्ञा, असदिति अर्थप्रतिषेधः। एतयोर्व्याघातो वैधर्म्यं व्याघातादव्यतिरेकानुपपत्तिरिति॥४८॥

[**वा** पृः ४५८; **टी** पृः ५८७; **प** पृः ५३२]

प्रागुत्पत्तेरुत्पत्ति[5]धर्मकमसदित्यद्धा। कस्मात्[6]?

**उत्पादव्ययदर्शनात्॥४।१।४९॥**

---

१. कारणात् J only २. कस्यचिन्निष्पत्तये J ३. समाने कारण॰ J only
४. प्राङ्निष्पत्तेः J ५. प्राङ्निष्पत्तेर्निष्पत्ति॰ J ६. कस्मात् Om J

[**वा** पृ: ४५९; **टी** पृ: ५८८; **प** पृ: ५३२]

यत् पुनरुक्तं प्रागुत्पत्तेः कार्यं[१] नासदुपादाननियमादिति—

**बुद्धिसिद्धं तु तदसत् ॥४।१।५०॥**

इदमस्योत्पत्तये समर्थं न सर्वमिति प्रागुत्पत्तेर्नियतकारणं[२] कार्यं बुद्ध्या सिद्धमुत्पत्तिनियमदर्शनात्। तस्मादुपादाननियमोपपत्तिः सति तु कार्ये प्रागुत्पत्तेरुत्पत्तिरेव[३] नास्तीति॥५०॥

[**वा** पृ: ४६१; **टी** पृ: ५९१; **प** पृ: ५३२]

**आश्रयव्यतिरेकाद् वृक्षफलोत्पत्तिवदित्यहेतुः॥४।१।५१॥**

मूलसेकादिपरिकर्म फलं चोभयं वृक्षाश्रयम्। कर्म चेह शरीरे। फलं चामुत्रेत्याश्रयव्यतिरेकादहेतुरिति॥५१॥

[**वा** पृ: ४६१; **टी** पृ: ५९१; **प** पृ: ५३३]

**प्रीतेरात्माश्रयत्वादप्रतिषेधः॥४।१।५२॥**

प्रीतिरात्मप्रत्यक्षत्वादात्माश्रया। तदाश्रयमेव कर्म धर्मसंज्ञितम्[४], धर्मस्यात्मगुणत्वात्। तस्मादाश्रयव्यतिरेकानुपपत्तिरिति॥५२॥

---

१. प्रागु...र्यं Om J    २. प्राङ्निष्पत्ते॰ J    ३. प्राङ्निष्पत्ते॰ J
४. धर्मसंज्ञकम् J

[**वा** पृः ४६२; **टी** पृः ५९१; **प** पृः ५३३]

**न पुत्रस्त्रीपशुपरिच्छदहिरण्यान्नादिफलनिर्देशात्॥४।१।५३॥**

पुत्रादि फलं निर्दिश्यते, न प्रीतिः। ग्रामकामो यजेत, पुत्रकामो[1] यजेतेति। तत्र यदुक्तं प्रीतिः फलमित्येतदयुक्तमिति॥५३॥

[**वा** पृः ४६२; **टी** पृः ५९१; **प** पृः ५३३]

**तत्सम्बन्धात् फलनिष्पत्तेस्तेषु फलवदुपचारः॥४।१।५४॥**

पुत्रादिसम्बन्धात् फलं प्रीतिलक्षणमुत्पद्यत[2] इति पुत्रादिषु फलवदुपचारः। यथान्ने प्राणशब्दः 'अन्नं वै प्राणाः' [द्रः महाभारत १३।६३।२५] इति॥५४॥

॥फलपरीक्षाप्रकरणम्॥

## [दुःखपरीक्षाप्रकरणम्]

[**वा** पृः ४६२; **टी** पृः ५९२; **प** पृः ५३४]

फलानन्तरं दुःखमुद्दिष्टम् । उक्तं च

**बाधनालक्षणं दुःखम् [१।१।२१]**

इति। तत् किमिदं प्रत्यात्मवेदनीयस्य सर्वजन्तुप्रत्यक्षस्य[3] सुखस्य[4] प्रत्याख्यानमाहोस्विदन्यः कल्प इति? अन्य इत्याह। कथम्? न वै सर्वलोकसाक्षिकं सुखं

१. अन्नादिकामो J २. निष्पद्यते for उत्पद्यते J ३. शारीरमानसस्य J
४. सुखस्य प्रीतेः J

शक्यं प्रत्याख्यातुम्। अयं तु जन्ममरणप्रबन्धानुभवनिमित्ताद् दु:खान्निर्विण्णस्य दु:खं जिहासतो दु:खसंज्ञाभावनोपदेशो दु:खहानार्थ इति। कया युक्त्या? सर्वे खलु सत्त्वनिकायाः सर्वाण्युपपत्तिस्थानानि[१] सर्वः पुनर्भवो बाधनानुषक्तो दु:खसाहचर्याद् बाधनालक्षणं दु:खमित्युक्तमृषिभिः, दु:खसंज्ञा भावनमुपदिश्यते। अत्र च हेतुरुपादीयते—

**विविधबाधनायोगाद् दु:खमेव जन्मोत्पत्तिः॥४।१।५५॥**

जन्म जायत इति शरीरेन्द्रियबुद्धयः। शरीरादीनां संस्थानविशिष्टानां प्रादुर्भाव उत्पत्तिः। विविधा च बाधना हीना मध्यमा उत्कृष्टा चेति। उत्कृष्टा नारकिणाम्, तिरश्चां तु मध्यमा, मनुष्याणां हीना, देवानां हीनतरा वीतरागाणाञ्च। एवं सर्वमुत्पत्तिस्थानं विविधबाधनानुषक्तं[२] पश्यतः सुखे च सुखसाधनेषु च शरीरेन्द्रियबुद्धिषु दु:खसंज्ञा व्यवतिष्ठते। दु:खसंज्ञाव्यवस्थानाच्च सर्वलोकेष्वनभिरतिसंज्ञा भवति। सर्वलोकेषु[३] अनभिरतिसंज्ञामुपासीनस्य सर्वलोकविषया[४] तृष्णा विच्छिद्यते। तृष्णाप्रहाणात् सर्वदु:खाद् विमुच्यत इति। यथा विषयोगात् पयो विषमिति बुध्यमानो नोपादत्ते, अनुपाददानो मरणदु:खं नाप्नोतीति॥५५॥

[**वा** पृः ४६३; **टी** पृः ५९३; **प** पृः ५३५]

दु:खोद्देशस्तु न[५] सुखस्य प्रत्याख्यानम्। कस्मात्[६]?

**न, सुखस्याप्यन्तरालनिष्पत्तेः॥४।१।५६॥**

---

१. उत्पत्तिस्थानानि for उपपत्तिस्थानानि TC २. युक्तं for अनुषक्तं J ३. सर्वलोकषु J only ४. विषक्ता for विषया J ५. न Om J ६. कस्मात् Om J

न खल्वयं दुःखोद्देशः सुखस्य प्रत्याख्यानम्। कस्मात्? सुखस्याप्यन्तरालनिष्पत्तेः। निष्पद्यते[1] खलु बाधनान्तरालेषु सुखं प्रत्यात्मवेदनीयं शरीरिणाम्[2]। तदशक्यं प्रत्याख्यातुमिति ॥५६॥

[**वा** पृः ४६३; **टी** पृः ५९३; **प** पृः ५३५]

अथापि—

**बाधनानिवृत्तेर्वेदयतः पर्येषणदोषादप्रतिषेधः ॥४।१।५७॥**

सुखस्य, दुःखोद्देशेनेति प्रकरणात्। पर्येषणं प्रार्थना, विषयार्जनतृष्णा। पर्येषणस्य दोषो यदयं वेदयमानः प्रार्थयते। तच्चास्य प्रार्थितं न सम्पद्यते, सम्पद्य वा विपद्यते, न्यूनं वा सम्पद्यते, बहुप्रत्यनीकं वा सम्पद्यत इति। एतस्मात् पर्येषणदोषान्नानाविधो मानसः सन्तापो भवति। एवं वेदयतः पर्येषणदोषाद् बाधनाया अनिवृत्तिः। बाधनाऽनिवृत्तेर्दुःखसंज्ञाभावनमुपदिश्यते। अनेन कारणेन दुःखं जन्म, न सुखस्याभावादिति। अथाप्येतद् अनूक्तम्।

कामं कामयमानस्य यदा कामः समृध्यति।

अथैनमपरः कामः क्षिप्रमेव प्रबाधते[3] ॥[द्रः महाभारतम् (सामीक्षिकं संस्करणम्) १३।९४।३०]

अपि चेदुदनेमि समन्तात् भूमिमिभां लभते सगवाश्वाम्।
न स तेन धनेन धनैषी तृप्यति किंनु सुखं धनकामे[4] ॥[ ]

इति ॥५७॥

---

१. उत्पद्यते J  २. सर्वश॰ J  ३. तृष्णा विध्यति वाणवत् for क्षिप्र...ते MBH, Cr. Ed.  ४. धनलाभः J

[**वा** पृ: ४६३; **टी** पृ: ५९४; **प** पृ: ५३५]

## दुःखविकल्पे सुखाभिमानाच्च ॥४।१।५८॥

दुःखसंज्ञाभावनोपदेशः क्रियते। अयं च खलु सुखसंवेदने व्यवस्थितः[१] सुखं परमपुरुषार्थं मन्यते। न[२] सुखादन्यन्निःश्रेयसमस्ति, सुखे प्राप्ते चरितार्थः कृतकरणीयो भवतीति। मिथ्यासङ्कल्पात् सुखे तत्साधनेषु च विषयेषु संरज्यते। संरक्तः सुखाय घटते। घटमानस्यास्य जन्मजराव्याधिप्रायणानिष्टसंप्रयोगेष्टविप्रयोग-प्रार्थितानुपपत्तिनिमित्तमनेकविधं[३] यावद् दुःखमुत्पद्यते, तत् दुःखविकल्पं सुख-मित्यभिमन्यते। सुखाङ्गभूतं दुःखम्। न दुःखमनासाद्य[४] शक्यं सुखमवाप्तुम्। तादर्थ्यात् सुखमेवेदमिति सुखसंज्ञोपहतप्रज्ञो 'जायस्व म्रियस्व' [द्र: छान्दोग्यो-पनिषत् ५।१०।८] इति संधावतीति संसारं नातिवर्तते । तदस्याः सुखसंज्ञायाः प्रतिपक्षो दुःखसंज्ञाभावनमुपदिश्यते। दुःखानुषङ्गाद्[५] दुःखं जन्मेति, न सुखस्या-भावात्।

यद्येवम्, कस्माद् दुःखं जन्मेति नोच्यते? सोऽयमेवं वाच्ये यदेवमाह दुःखमेव जन्मेति, तेन सुखाभावं ज्ञापयतीति जन्मविनिग्रहार्थीयो वै खल्वयमेव शब्दः। कथम्? न दुःखं जन्म स्वरूपतः, किं तु दुःखोपचारात्, एवं सुखमपीति। [६]एतदनेनैव निर्वर्त्यते, न तु[७] दुःखमेव जन्मेति॥५८॥

॥दुःखपरीक्षाप्रकरणम्॥

---

१. अवस्थितः J २. परमः पुरुषस्य अर्थो न for परम...न J ३. अनापत्ति for अनुपपत्ति J ४. अनापद्य for अनासाद्य J; अनापाद्य C var ५. अनुबन्धाद् for अनुषङ्गाद् J ६. कथम्? दुःखं जन्म किञ्चिद्दुःखवियोगात् सुखमपीति J ७. तेन for न तु J

## [ अपवर्गपरीक्षाप्रकरणम् ]

[**वा** पृः ४६४; **टी** पृः ५९५; **प** पृः ५३६]

दुःखोद्देशानन्तरमपवर्गः, स प्रत्याख्यायते—

**ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः ॥४।१।५९॥**

ऋणानुबन्धान्नास्त्यपवर्गः।

जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवान् जायते, ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः [तैत्तिरीयसंहिता (आनन्दाश्रम) खण्ड १, पृः ४२] इति ऋणानि, तेषामनुबन्धः आजरसं[1] स्वकर्मभिः[2] सम्बन्धः, कर्मसम्बन्धवचनात्[3]—

जरामर्यं वा एतत् सत्रं यदग्निहोत्रं दर्शपूर्णमासौ चेति। जरया ह वा एष तस्मात् सत्राद् विमुच्यते, मृत्युना ह वेति [द्रः शबरभाष्यम्, २.४.५] ऋणानुबन्धादपवर्गानुष्ठानकालो नास्तीत्यपवर्गाभावः।

क्लेशानुबन्धान्नास्त्यपवर्गः।

क्लेशानुबद्ध एवायं म्रियते, क्लेशानुबद्धो जायते, नास्य क्लेशानुबन्धविच्छेदो गृह्यत इति।

प्रवृत्त्यनुबन्धान्नास्त्यपवर्गः।

जन्मप्रभृत्ययं यावत् प्रायणं वाग्बुद्धिशरीरारम्भेणाविमुक्तो गृह्यते। तत्र यदुक्तम्—

**दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये**
**तदनन्तरापायादपवर्गः**[4] **[ १।१।२ ]**

इति तदनुपपन्नमिति ॥५९॥

---

१. आजरसं J only २. कर्मभिः J ३. कर्म...त् Om J
४. तदनन्तराभावाद॰ JC

[**वा** पृ: ४६४; **टी** पृ: ५९५; **प** पृ: ५३६]

अत्राभिधीयते। यत् तावद् ऋणानुबन्धादिति ऋणैरिव[1] ऋणैरिति—

**प्रधानशब्दानुपपत्तेर्गुणशब्देनानुवादो निन्दाप्रशंसोपपत्तेः ॥४।१।६०॥**

ऋणैरिति नायं प्रधानशब्दः। यत्र खल्वेकः प्रत्यादेयं ददाति द्वितीयश्च प्रतिदेयं गृह्णाति, तत्रास्य दृष्टत्वात् प्रधानमृणशब्दः। न चैतदिहोपपद्यते। प्रधानशब्दानुपपत्तेः। गुणशब्देनायमनुवादः[2] ऋणैरिव ऋणैरिति। अप्रयुक्तोपमं[3] चैतद् यथाग्निर्माणवक इति। अन्यत्र दृष्टश्चायमृणशब्द इह प्रयुज्यते। यथाग्निशब्दो माणवके। कथं गुणशब्देनानुवादः[4]? निन्दाप्रशंसोपपत्तेः। कर्मलोपे ऋणीव[5] ऋणादानान्निन्द्यते[6]। कर्मानुष्ठाने च ऋणीव[7] ऋणदानात्[8] प्रशस्यते। स एवोपमार्थ इति।

जायमान इति च गुणशब्दो विपर्ययेऽनधिकारात्। जायमानो ह वै ब्राह्मण इति च गुणशब्दो गृहस्थः सम्पद्यमानो जायमान इति। यदायं गृहस्थो जायते, तदा कर्मभिरधिक्रियते, मातृतो जायमानस्यानधिकारात्[9]। यदा तु मातृतो जायते कुमारको न तदा कर्मभिरधिक्रियते, अर्थिनः शक्तस्य चाधिकारात्। अर्थिनः कर्मभिरधिकारः, कर्मविधौ कामसंयोगस्मृतेः[10]। अग्निहोत्रं जुहुयात् स्वर्गकामः इत्येवमादि। शक्तस्य प्रवृत्तिसम्भवादिति। शक्तस्य च कर्मभिरधिकारः प्रवृत्तिसम्भवात्। शक्तः खलु विहिते कर्मणि प्रवर्तते नेतर इति। उभयाभावस्तु प्रधानशब्दार्थे, मातृतो जायमाने कुमारके उभयमर्थिता शक्तिश्च न भवतीति।

---

१. ऋणैरिव Om J　२. अर्थवादः for अनुवादः J　३. प्रयुक्तोपमं C; अप्रयुक्तोपमं J, NV,T　४. अर्थवादः for अनुवादः J　५. ऋणीव Om J　६. ऋणादानवन्निन्द्यते J　७. ऋणीव Om J　८. ऋणदानवत् J　९. मातृतो..त्। Om J　१०. संप्रयोग for संयोग J

न भिद्यते च लौकिकाद् वाक्याद् वैदिकं वाक्यं प्रेक्षापूर्वकारिपुरुषप्रणीतत्वेन। तत्र लौकिकस्तावदपरीक्षकोऽपि न जायमानं कुमारकमेवं ब्रूयाद् अधीष्व यजस्व ब्रह्मचर्यं चरेति। कुत एवम् ऋषिरुपपन्नानवद्यवादी उपदेशार्थेन प्रयुक्त उपदिशतीति। न खलु वै नर्तकोऽन्धेषु प्रवर्तते, न गायको[१] बधिरेष्विति।

उपदिष्टार्थविज्ञानं चोपदेशविषयः। यश्चोपदिष्टमर्थं विजानाति तं प्रत्युपदेशः क्रियते, न चैतदस्ति जायमानकुमारक इति। गार्हस्थ्यलिङ्गं च मन्त्रब्राह्मणं कर्माभिवदति। यच्च मन्त्रब्राह्मणं कर्माभिवदति, तत् पत्नीसम्बन्धादिना गार्हस्थ्यलिङ्गेनोपपन्नम्। तस्माद् गृहस्थोऽयं जायमानोऽभिधीयत इति।

अर्थित्वस्य चाविपरिणामे जरामर्यवादोपपत्तिः। यावच्चास्य फलेनार्थित्वं न विपरिणमते न निवर्तते तावदनेन कर्मानुष्ठेयमित्युपपद्यते। जरामर्यवादस्तं प्रतीति। जरया ह वेत्यायुषस्तुरीयस्य चतुर्थस्य प्रव्रज्यायुक्तस्य वचनम्। जरया ह वा एष एतस्माद्[२] विमुच्यत इति। आयुषस्तुरीयं चतुर्थं[३] प्रव्रज्यायुक्तं जरेत्युच्यते। तत्र हि प्रव्रज्या विधीयते। अत्यन्तसंयोगे[४] जरया ह वेत्यनर्थकम् अशक्तो विमुच्यत इत्येतदपि नोपपद्यते। स्वयमशक्तस्य बाह्यां शक्तिमाह, अन्तेवासी वा जुहुयाद् ब्रह्मणा स परिक्रीतः। क्षीरहोता वा जुहुयाद् धनेन स परिक्रीत इति।

अथापि विहितं वाऽनूद्येत, कामाद् वार्थः परिकल्पेत? विहितानुवचनं न्याय्यमिति। ऋणवानिवास्वतन्त्रो[५] गृहस्थः कर्मसु प्रवर्तत इत्युपपन्नं वाक्यस्य सामर्थ्यम्। फलस्य साधनानि प्रयत्नविषयो न फलम्। तानि हि सम्पन्नानि फलाय कल्पन्ते। विहितं च जायमानम्[६]। विधीयते च जायमानम्[७]। तेन यः सम्बध्यते सोऽयं जायमान इति।

प्रत्यक्षविधानाभावादिति चेत्—न, प्रतिषेधस्यापि प्रत्यक्षविधानाभावादिति। प्रत्यक्षतो विधीयते गार्हस्थ्यं ब्राह्मणेन, यदि चाश्रमान्तरमभविष्यत्, तदपि व्यधास्यत

१. गायनो JT २. एतस्मात् सत्रात् J ३. चतुर्थं विभागान्तरं J ४. अत्यन्तजरासंयोगे TC ५. ऋणवानिव ऋणवानस्वतन्त्रो J ६. जायमानं कर्म J ७. जायमानं कर्म J

प्रत्यक्षतः। प्रत्यक्षविधानाभावात् नास्त्याश्रमान्तरमिति। न, प्रतिषेधस्यापि प्रत्यक्षतो विधानाभावात्। न[१], प्रतिषेधोऽपि वै ब्राह्मणेन प्रत्यक्षतो विधीयते। न सन्त्याश्रमान्तराणि, एक एव गृहस्थाश्रम इति प्रतिषेधस्य प्रत्यक्षतोऽश्रवणाद-युक्तमेतदिति।

अधिकाराच्च विधानं विद्यान्तरवत्। यथा शास्त्रान्तराणि स्वे स्वेऽधिकारे प्रत्यक्षतो विधायकानि, नार्थान्तराभावात्, एवमिदं ब्राह्मणं गृहस्थशास्त्रं स्वेऽधिकारे प्रत्यक्षतो विधायकं नाश्रमान्तराणामभावादिति।

ऋग्ब्राह्मणं चापवर्गाभिधाय्यभिधीयते। ऋचश्च ब्राह्मणानि चापवर्गाभिवादीनि भवन्ति। ऋचश्च तावत्—

कर्मभिर्मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमिच्छमानाः[२]।
अथापरे ऋषयो मनीषिणः परं कर्मभ्योऽमृतत्वमानशुः॥ [ ]
न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः।
परेण नाकं निहितं गुहायां विभ्राजते यद् यतयो विशन्ति॥
[तैत्तिरीयारण्यके ३।१२।७]

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।
तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय॥
[वाजसनेयी संहिता ३।१।१८, श्वेताश्वतरोपनिषत् ३।८]

अथ ब्राह्मणानि—

त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति। प्रथमः तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन् सर्व एवैते पुण्यलोका भवन्ति। ब्रह्मसंस्थोऽमृतत्वमेति॥
[छान्दोग्योपनिषत् २।२३।१]

---

१. न, प्रतिषेध...न, Om J　　२. ईहमानाः for इच्छमानाः JC var

एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति।

[बृहदारण्यकोपनिषत् ४।४।२२]

अथो खल्वाहुः काममय एवायं पुरुष इति। स यथाकामो भवति, तत् क्रतुर्भवति यत्क्रतुर्भवति तत् कर्म कुरुते। यत् कर्म कुरुते तदभिसम्पद्यते॥

[बृहदारण्यकोपनिषत् ४।४।५]

इति कर्मभिः संसरणमुक्त्वा प्रकृतमन्यदुपदिशन्ति—

इति नु कामयमानोऽथाकामयमानो योऽकामो निष्काम आत्मकाम आप्तकामो न तस्य प्राणा उत्क्रामन्ति इहैव समवलीयन्ते ब्रह्मैव सन् ब्रह्माप्येति इति।

[द्रः बृहदारण्यकोपनिषत् ४।४।६]

तत्र यदुक्तमृणानुबन्धादपवर्गाभाव इत्येतदयुक्तमिति।

ये चत्वारः पथयो देवयानाः [तैत्तिरीयसंहिता ५।७।२।३]

इति च चातुराश्रम्यश्रुतेरैकाश्रम्यानुपपत्तिः॥६०॥

[**वा** पृः ४६६; **टी** पृः ५९९; **प** पृः ५३८]

फलार्थिनश्चेदं ब्राह्मणम्—

जरामर्यं वा एतत् सत्रम् यदग्निहोत्रं दर्शपूर्णमासौ च इति। कथम्?

**समारोपणादात्मन्यप्रतिषेधः॥४।१।६१॥**

'प्राजापत्यामिष्टिं निरूप्य तस्यां सर्ववेदसं हुत्वा आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेत्' [ ] इति श्रूयते। तेन विजानीमः प्रजावित्तलोकैषणाभ्यो व्युत्थितस्य निवृत्ते फलार्थित्वे समारोपणं विधीयत इति। एवं च ब्राह्मणानि—

अन्यद्वृत्तमुपाकरिष्यन् मैत्रेयीति होवाच याज्ञवल्क्यः प्रव्रजिष्यन् वा अरे अहमस्मात् स्थानादस्मि। हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति।

[बृहदारण्यकोपनिषत्४।५।२]

अथापि

उक्तानुशासनाऽसि मैत्रेय्येतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राजेति। [द्र: बृहदारण्यकोपनिषत् ४।५।१५]

इति ॥६१॥

[**वा** पृ: ४६७; **टी** पृ: ६००; **प** पृ: ५३८]

## पात्रचयान्तानुपपत्तेश्च फलाभावः ॥४।१।६२॥

जरामर्ये च कर्मण्यविशेषेण कल्प्यमाने सर्वस्य पात्रचयान्तानि कर्माणीति प्रसज्यते। तत्रैषणाव्युत्थानं न श्रूयेत।

एतद्ध स्म वै तत् पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति

[बृहदारण्यकोपनिषत् ४।४।२२]

इति।

एषणाभ्यश्च व्युत्थितस्य पात्रचयान्तानि कर्माणि नोपपद्यन्त इति नाविशेषेण कर्तुः प्रयोजकं फलं भवतीति।

चातुराश्रम्यविधानाच्चेतिहासपुराणधर्मशास्त्रेष्वैकाश्रम्यानुपपत्तिः।

तदप्रमाणमिति चेत्—न, प्रमाणेन प्रामाण्याभ्यनुज्ञानात्। प्रमाणेन खलु [१]ब्राह्मणेनेतिहासपुराणस्य प्रामाण्यमभ्यनुज्ञायते—

ते वा खल्वेते अथर्वाङ्गिरस एतदितिहासपुराणमभ्यवदन्नितिहासपुराणं पञ्चमं वेदानां वेद इति। [द्र: छान्दोग्योपनिषत् ३।४।२]

१. मन्त्रब्राह्मणे J

[**वा** पृः ४६८; **टी** पृः ६०२; **प** पृः ५३९]

**अपर** आह[१]—

## अणुश्यामताऽनित्यत्ववद्वा ॥४।१।६७॥

यथानादिरणुश्यामता, अथ चाग्निसंयोगादनित्या[२], तथा क्लेशसन्ततिरपीति। सतः खलु धर्मो नित्यत्वमनित्यत्वं च। तत्त्वं भावे तत्त्वाभावे भाक्तमिति। अनादिरणुश्यामतेति हेत्वभावादयुक्तम्। अनुत्पत्तिधर्मकमनित्यमिति नात्र हेतुरस्तीति॥६७॥

[**वा** पृः४६८; **टी** पृः६०३; **प** पृः ५३९]

अयं तु समाधिः—

## न, सङ्कल्पनिमित्तत्वाच्च रागादीनाम्॥४।१।६८॥

कर्मनिमित्तत्वादितरेतरनिमित्तत्वाच्चेति समुच्चयः। मिथ्यासङ्कल्पेभ्यो रञ्जनीयकोपनीयमोहनीयेभ्यो रागद्वेषमोहा उत्पद्यन्ते, कर्म च सत्त्वनिकायनिर्वर्तकं नैयमिकान् रागद्वेषमोहान् निर्वर्तयति, नियमदर्शनात्। दृश्यते च सत्त्वनिकायो हि कश्चिद् रागबहुलः कश्चित् क्रोधबहुलः[३], कश्चिन्मोहबहुल इति। इतरेतरनिमित्ता च रागादीनामुत्पत्तिः। मूढो रज्यति मूढः कुप्यति रक्तो मुह्यति कुपितो मुह्यति [४]रक्तः कुप्यतीति।

सर्वमिथ्यासङ्कल्पानां च तत्त्वज्ञानादनुत्पत्तिः। कारणानुत्पत्तौ च कार्य-

---

१. अपर आह Om J २. अग्निसंयोगाद् Om J ३. द्वेषबहुलः TC
४. रक्तः कुप्यति J only

स्यानुत्पत्तेरिति रागादीनामत्यन्तमनुत्पत्तिरिति। अनादिश्च क्लेशसन्ततिरित्ययुक्तम्। सर्व एवामी[1] खल्वाध्यात्मिका भावा अनादिना प्रबन्धेन प्रवर्तन्ते शरीरादयः। न जात्वत्र कश्चिदनुत्पन्नपूर्वः प्रथमत उत्पद्यतेऽन्यत्र तत्त्वज्ञानात्। न चैवं सत्यनुत्पत्तिधर्मकं व्ययधर्मकं किञ्चित् प्रतिज्ञायत इति। कर्म च सत्त्वनिकायनिर्वर्तकं तत्त्वज्ञानकृतान्मिथ्यासङ्कल्पविघातान्न रागाद्युत्पत्तिनिमित्तं भवति, सुखदुःखसंवित्तिफलं[2] तु भवतीति॥६८॥

॥अपवर्गपरीक्षाप्रकरणम्॥

॥अवसितं सभाष्ये न्यायदर्शने चतुर्थाध्यायस्य प्रथमाह्निकम्॥

---

१. इमे for एवामी TC    २. ॰वित्तिः फलं TC

# चतुर्थाध्यायस्य द्वितीयाह्निकम्

## [ तत्वज्ञानोत्पत्तिप्रकरणम् ]

[**वा** पृ: ४७०; **टी** पृ: ६०५; **प** पृ: ५४१]

किं नु खलु भोः यावन्तो विषयास्तावत्सु प्रत्येकं तत्त्वज्ञानमुत्पद्यते, अथ क्वचिदुत्पद्यत इति। कश्चात्र विशेषः? न तावदेकैकत्र यावद्विषयमुत्पद्यते ज्ञेयानामानन्त्यात्। नापि क्वचिदुत्पद्यते, यत्र नोत्पद्यते तत्रानिवृत्तो मोह इति मोहशेषप्रसङ्गः। न चान्यविषयेण तत्त्वज्ञानेनान्यविषयो मोहः शक्यः प्रतिषेद्धुमिति।

मिथ्याज्ञानं खलु वै मोहो न तत्त्वज्ञानस्यानुत्पत्तिमात्रम्। तच्च मिथ्याज्ञानं यत्र विषये प्रवर्तमानं संसारबीजं भवति स विषयस्तत्त्वतो ज्ञेय इति।

किं पुनस्तन्मिथ्याज्ञानमिति? अनात्मन्यात्मग्रहः। अहमस्मीति मोहोऽहङ्कार इति। अनात्मानं खल्वहमस्मीति पश्यतो दृष्टिरहङ्कार इति। किं पुनस्तदर्थजातं यद्विषयोऽहङ्कारः? शरीरेन्द्रियमनोवेदनाबुद्धयः। कथं तद्विषयोऽहङ्कारः संसारबीजं भवति? अयं खलु शरीराद्यर्थजातमहमस्मीति व्यवसितः तदुच्छेदादात्मोच्छेदं मन्यमानोऽनुच्छेदतृष्णया परिप्लुतः पुनः पुनस्तदुपादत्ते। तदुपाददानो जन्ममरणाय यतते। तेन [१]शरीरेणावियोगान्नात्यन्तं दुःखाद् विमुच्यत इति। यस्तु दुःखं दुःखायतनं दुःखानुषक्तं सुखं च सर्वमिदं दुःखमिति पश्यति स दुःखं परिजानाति, परिज्ञातं च दुःखं प्रहीणं भवत्यनुपादानात् सविषान्नवत्। एवं दोषान् कर्म च दुःखहेतुरिति पश्यति। न चाप्रहीणेषु दोषेषु दुःखप्रबन्धोच्छेदेन शक्यं भवितुमिति स दोषान् प्रजहाति। प्रहीणेषु च दोषेषु '**न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य**'[२] **[ ४।१।६४ ]** इत्युक्तम्।

प्रेत्यभावफलदुःखानि च परिज्ञेयानि[३] व्यवस्थापयति कर्म च दोषांश्च

---

१. शरीरेण J only  २. हीनक्लेशस्य J only  ३. परि Om TC

प्रहेयान्। अपवर्गोऽधिगन्तव्यतया। तस्याधिगमोपायस्तत्त्वज्ञानम्। एवं चतसृभिर्विधाभिः प्रमेयं प्रविभक्तमासेवमानस्याभ्यस्यतो भावयतः सम्यग्दर्शनं यथाभूतावबोधस्तत्त्वज्ञानमुत्पद्यते।

एवं च—

**दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः॥४।२।१॥**

शरीरादिदुःखान्तं प्रमेयं दोषनिमित्तं तद्विषयत्वान्मिथ्याज्ञानस्य। तदिदं तत्त्वज्ञानं तद्विषयमुत्पन्नमहङ्कारं निवर्तयति, समानविषये तयोर्विरोधात्। एवं तत्त्वज्ञानात्

**दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः**[१] **[ १।१।२ ]**

इति। स चायं शास्त्रार्थसंग्रहोऽनूद्यते, नापूर्वो विधीयत इति॥१॥

[**वा** पृः ४७१; **टी** पृः ६०७; **प** पृः ५४३]

प्रसंख्यानानुपूर्वी[२] तु खलु—

**दोषनिमित्तं रूपादयो विषयाः सङ्कल्पकृताः॥४।२।२॥**

कामविषया इन्द्रियार्था इति रूपादय उच्यन्ते। ते च मिथ्यासङ्कल्प्यमाना रागद्वेषमोहान् प्रवर्तयन्ति। तान् पूर्वं प्रसञ्चक्षीत। तांश्च[३] प्रसञ्चक्षाणस्य रूपादिविषयो मिथ्यासंकल्पो निवर्तते। तन्निवृत्तावध्यात्मं शरीरादीन् प्रसञ्चक्षीत। तत्प्रसङ्ख्यानाद-

---

१. अभावाद् for अपायाद् C  २. ॰नुपूर्व्या J  ३. तांश्च Om J

ध्यात्मविषयोऽहङ्कारो निवर्तते। सोऽयमध्यात्मं बहिश्च विविक्तचित्तो विहरन् मुक्त इत्युच्यते ॥२॥

[**वा** पृ: ४७१; **टी** पृ: ६०७; **प** पृ: ५४३]

अतः परं काचित्संज्ञा प्रहेया काचिद् भावनीयेत्युपदिश्यते[१], नार्थनिराकरणमर्थोपादानं वा। कथमिति?

**तन्निमित्तं त्ववयव्यभिमानः ॥४।२।३॥**

तेषां दोषाणां निमित्तं त्ववयव्यभिमानः। सा तु खलु स्त्रीसंज्ञा सपरिष्कारा पुरुषस्य, पुरुषसंज्ञा च स्त्रियाः। परिष्कारस्तु[२] निमित्तसंज्ञा अनुव्यञ्जनसंज्ञा च। निमित्तसंज्ञा—रसनाश्रोत्रम्, दन्तोष्ठम्, चक्षुर्नासिकमिति। अनुव्यञ्जनसंज्ञा—इत्थं दन्ता[३] इत्थमोष्ठाविति। सेयं संज्ञा कामरागं प्रवर्तयति[४] तदनुषक्तांश्च दोषान् प्रवर्तयति इति विवर्जनीया[५], वर्जनं त्वस्याः। भेदेनावयवसंज्ञा—केशलोममांसशोणितास्थिस्नायुशिराकफपित्तोच्चारादिसंज्ञा। तामशुभसंज्ञेत्याचक्षते। तामस्य भावयतः कामरागः प्रहीयते।

सत्येव च द्विविधे विषये काचित्संज्ञा भावनीया। काचिद् वर्जनीयेत्युपदिश्यते। यथा विषसम्पृक्तेऽन्नेऽन्नसंज्ञोपादानाय विषसंज्ञाप्रहाणायेति ॥३॥

॥तत्वज्ञानोत्पत्तिप्रकरणम्॥

---

१. भावयितव्या for भावनीया C २. सपरिष्कारा for परिष्कारस्तु TC ३. इत्थं दन्ता Om T ४. कामं वर्धयति for काम.....ति TC ५. दोषान् विवर्जनीयान् TC

# [ अवयवावयविप्रकरणम् ]

[**वा** पृ: ४७२; **टी** पृ: ६०९; **प** पृ: ५४४]

अथेदानीमर्थं निराकरिष्यतावयविनिराकरणमुपपाद्यते—

**विद्याविद्याद्वैविध्यात् संशयः ॥४।२।४॥**

सदसतोरुपलम्भाद् विद्या द्विविधा। सदसतोरनुपलम्भादविद्यापि द्विविधा। उपलभ्यमाने चावयविनि विद्याद्वैविध्यात् संशयः। अनुपलभ्यमाने चाविद्याद्वैविध्यात् संशयः। सोऽयमवयवी यद्युपलभ्यते अथापि नोपलभ्यते न कथञ्चित्[1] संशयान्मुच्यत इति ॥४॥

[**वा** पृ: ४७२; **टी** प: ६०९; **प** पृ: ५४५]

**तदसंशयः पूर्वहेतुप्रसिद्धत्वात् ॥४।२।५॥**

तस्मिन्ननुपपन्नः संशयः। कस्मात्? पूर्वोक्तानां हेतूनामप्रतिषेधादस्ति द्रव्यान्तरारम्भ इति ॥५॥

[**वा** पृ: ४७२; **टी** पृ: ६१०; **प** पृ: ५४५]

**वृत्त्यनुपपत्तेरपि न संशयः ॥४।२।६॥**

---

१. कथञ्चन TC

वृत्त्यनुपपत्तेरपि तर्हि[१] संशयानुपपत्तिर्नास्त्येव [२]ह्यवयवीति ॥६॥

[**वा** पृः ४७३; **टी** पृः ६१०; **प** पृः ५४५]

तद्विभजते—

**कृत्स्नैकदेशावृत्तित्वादवयवानामवयव्यभावः ॥४।२।७॥**

एकैकोऽवयवो न तावत् कृत्स्नेऽवयविनि वर्तते, तयोः परिमाणभेदादवयवान्तरसम्बन्धाभावप्रसङ्गाच्च। नाप्यवयव्येकदेशेषु[३] एकैकोऽवयवो वर्तते[४]। न ह्यस्यान्ये अवयवा एकदेशभूताः सन्तीति ॥७॥

[**वा** पृः ४७३; **टी** पृः ६१०; **प** पृः ५४५]

अथावयवेष्वेवावयवी वर्तते

**तेषु चावृत्तेरवयव्यभावः ॥४।२।८॥**

न तावत्प्रत्यवयवं वर्तते, तयोः परिमाणभेदाद् द्रव्यस्य चैकद्रव्यत्वप्रसङ्गात्। नाप्येकदेशैः सर्वेष्वन्यावयवाभावात्। तदेवं न युक्तः संशयो[५] नास्त्यवयवीति ॥८॥

[**वा** पृः ४७४; **टी** पृः ६१०; **प** पृः ५४५ ]

**पृथक् चावयवेभ्योऽवृत्तेः ॥४।२।९॥**

---

१. तर्हि Om J  २. एव Om TC  ३. °देशेन TC  ४. एकै...ते Om TC
५. मुक्तसंशयं for न..शयो J; मुक्तसंशयः C var

अवयव्यभाव इति वर्तते। न चायं पृथगवयवेभ्यो वर्तते, अग्रहणात् नित्यत्व-प्रसङ्गाच्च। तस्मान्नास्त्यवयवीति[१] ॥९॥

[**वा** पृः ४७४; **टी** पृः ६११; **प** पृः ५४६]

**न चावयव्यवयवाः ॥४।२।१०॥**

न चावयवानां धर्ममात्रमवयवी[२]। कस्मात्? धर्ममात्रस्य धर्मिभिरवयवैः पूर्ववत् सम्बन्धानुपपत्तेः। पृथक् चावयवेभ्यो धर्मिभ्यो धर्मस्याग्रहणाच्च समानम् ॥१०॥

[**वा** पृः ४७४; **टी** पृः ६११; **प** पृः ५४६]

**एकस्मिन् भेदाभावाद् भेदशब्दप्रयोगानुपपत्तेरप्रश्नः ॥४।२।११॥**

किं प्रत्यवयवं कृत्स्नोऽवयवी वर्तते, अथैकदेशेनेति नोपपद्यते प्रश्नः। कस्मात्? एकस्मिन् भेदाभावाद् भेदशब्दप्रयोगानुपपत्तेः। कृत्स्नमित्यनेकस्या-शेषाभिधानम्। एकदेश इति नानात्वे कस्यचिदभिधानम्। ताविमौ कृत्स्नैकदेशशब्दौ भेदविषयौ नैकस्मिन्नवयविन्युपपद्येते, भेदाभावादिति ॥११॥

[**वा** पृः ४७५; **टी** पृः ६११; **प** पृः ५४६]

अन्यावयवाभावान्नैकदेशेन वर्तत इत्यहेतुः—

---

१. तस्मान्नास्त्येवेति for त...ति J   २. धर्मोऽवयवी for ध...वी TC

## अवयवान्तरभावेऽप्यवृत्तेरहेतुः ॥४।२।१२॥

अवयवान्तराभावादिति। [१]यद्यप्येकदेशोऽवयवान्तरभूतः स्यात् तथाप्यवयवेऽवयवान्तरं वर्तते[२] नावयवीति। [३]अन्यावयवभावेऽप्यवृत्तेरवयविनो नैकदेशेन वृत्तिरन्यावयवाभावादित्यहेतुः।

वृत्तिः कथमिति चेत्? एकस्यानेकत्राश्रयाश्रितसम्बन्धलक्षणा प्राप्तिः। आश्रयाश्रितभावः कथमिति चेत्? यस्य यतोऽन्यत्रात्मलाभानुपपत्तिः स आश्रयः। न खलु[४] कारणद्रव्येभ्योऽन्यत्र कार्यद्रव्यमात्मानं लभते, विपर्ययस्तु कारणद्रव्येष्विति।

नित्येषु कथमिति चेत्? अनित्येषु दर्शनात् सिद्धम्। नित्येषु द्रव्यगुणेषु[५] कथमाश्रयाश्रितभाव इति चेत्? अनित्येषु द्रव्यगुणेषु[६] दर्शनादाश्रयाश्रितभावस्य नित्येषु सिद्धिरिति।

तस्मादवयव्यभिमानः प्रतिषिध्यते निःश्रेयसकामस्य नावयवी यथा रूपादिषु मिथ्यासङ्कल्पो न रूपादय इति॥१२॥

[**वा** पृ: ४७७; **टी** पृ: ६१४; **प** पृ: ५४७]

सर्वाग्रहणमवयव्यसिद्धेरिति प्रत्यवस्थितोऽथेदमाह[७]—

## केशसमूहे तैमिरिकोपलब्धिवत् तदुपलब्धिः ॥४।२।१३॥

यथैकैकः केशस्तैमिरिकेन नोपलभ्यते [८]केशसमूहस्तूपलभ्यते, तथैकैकोऽणुर्नोपलभ्यते अणुसञ्चयस्तूपलभ्यते। तदिदमणुसमूहविषयं ग्रहणमिति॥१३॥

---

१. अवयविनो for अव...दिति J  २. वर्तेत C  ३. अन्योऽवयवीति added before अन्याव... C only  ४. खलु J only  ५. द्रव्येषु TC  ६. द्रव्यगुणेषु Om J  ७. °तोऽप्येतदाह TC  ८. केश Om J

[**वा** पृः ४७७; **टी** पृः ६१४; **प** पृः ५४७]

**स्वविषयानतिक्रमेणेन्द्रियस्य पटुमन्दभावाद् विषयग्रहणस्य तथाभावो नाविषये प्रवृत्तिः॥४।२।१४॥**

यथाविषयमिन्द्रियाणां पटुमन्दभावाद् विषयग्रहणानां पटुमन्दभावो भवति। चक्षुः खलु प्रकृष्यमाणं नाविषयं गन्धं गृह्णाति, निकृष्यमाणं च न स्वविषयात् प्रच्यवते। सोऽयं तैमिरिकः कश्चिच्चक्षुर्विषयं केशं न गृह्णाति, कश्चिद् गृह्णाति च केशसमूहम्। उभयं ह्यतैमिरिकेण चक्षुषा गृह्यते। परमाणवस्त्वतीन्द्रिया इन्द्रियाविषयभूता न केनचिदिन्द्रियेण गृह्यन्ते। ते विभक्ता न गृह्यन्ते[१] समुच्चितास्तु[२] गृह्यन्त इत्यविषये प्रवृत्तिरिन्द्रियस्येति प्रसज्येत। न जात्वर्थान्तरमणुभ्यो गृह्यत इति। ते खल्विमे परमाणवः [३]सञ्चिता गृह्यमाणा अतीन्द्रियत्वं जहति, [४]विभक्ताश्चागृह्यमाणा इन्द्रियविषयत्वं न लभन्ते। सोऽयं द्रव्यान्तरानुत्पत्तावतिमहान् व्याघात इत्युपपद्यते द्रव्यान्तरं यद् ग्रहणस्य विषय इति।

सञ्चयमात्रं विषय इति चेन्न, सञ्चयस्य संयोगभावात् तस्य चातीन्द्रियस्याग्रहणादयुक्तम्। सञ्चयः खल्वनेकस्य संयोगः, स च गृह्यमाणाश्रयो गृह्यते नातीन्द्रियाश्रयः। भवति हीदमनेन संयुक्तमिति। तस्मादयुक्तमेतदिति।

गृह्यमाणस्य चेन्द्रियेण विषयस्यावरणाद्यनुपलब्धिकारणमुपलभ्यते। न चेन्द्रियदौर्बल्यमस्ति[५]। तस्मान्नेन्द्रियदौर्बल्यादनुपलब्धिरणूनाम्, यथा नेन्द्रियदौर्बल्याच्चक्षुषानुपलब्धिर्गन्धादीनामिति॥१४॥

---

१. ते.....न्ते J only  २. समुदिता॰ TC  ३. सन्निहिता TC
४. वियुक्ताः for विभक्ताः TC  ५. न....मस्ति। J only

[**वा** पृ: ४७८; **टी** पृ: ६१४; **प** पृ: ५४७]

## अवयवावयविप्रसङ्गश्चैवमा प्रलयात्॥४।२।१५॥

यः खल्ववयविनोऽवयवेषु वृत्तिप्रतिषेधाभाव उक्तः[१], सोऽयमवयवस्यावयवेषु प्रसज्यमानः सर्वप्रलयाय वा कल्पेत, निरवयवाद्वा परमाणुतो निवर्तेत। उभयथा चोपलब्धिविषयस्याभावः, तदभावादुपलब्ध्यभावः। उपलब्ध्याश्रयश्चायं वृत्तिप्रतिषेधः। स आश्रयं व्याघ्नन्नात्मघाताय कल्पत इति॥१५॥

[**वा** पृ: ४७८; **टी** पृ: ६१५; **प** पृ: ५४७]

अथापि—

## न प्रलयोऽणुसद्भावात् ॥४।२।१६॥

अवयवविभागमाश्रित्य वृत्तिप्रतिषेधादभावः प्रसज्यमानो निरवयवात् परमाणुतो निवर्तते, न सर्वप्रलयाय कल्पते। निरवयवत्वं तु खलु[२] परमाणोर्विभागेऽल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्रावस्थानात्। लोष्टस्य खलु प्रविभज्यमानावयवस्याल्पतरमल्पतममुत्तरमुत्तरं भवति। स चायमल्पतरप्रसङ्गः यस्मान्नाल्पतरमस्ति यः परमाल्पस्तत्र निवर्तते, यतश्च नाल्पीयोऽस्ति, तं परमाणुं प्रचक्ष्महे इति॥१६॥

[**वा** पृ: ४७९; **टी** पृ: ६१५; **प** पृ: ५४७]

## परं वा त्रुटेः॥४।२।१७॥

१. उक्तः J only २. खलु J only

अवयवविभागस्यानवस्थानाद् द्रव्यानामसङ्ख्येयत्वात् त्रुटित्वनिवृत्तिरिति ॥१७॥

॥अवयवावयविप्रकरणम्॥

# [ निरवयवत्वप्रकरणम् ]

[**वा** पृः ४७९; **टी** पृः ६१६; **प** पृः ५४८]

अथेदानीमानुपलम्भिकः सर्वं नास्तीति मन्यमान आह—

**आकाशव्यतिभेदात् तदनुपपत्तिः ॥४।२।१८॥**

तस्याणोर्निरवयवस्य नित्यस्यानुपपत्तिः। कस्मात्? आकाशव्यतिभेदात्। अन्तर्बहिश्चाणुराकाशेन समाविष्टो व्यतिभिन्नः, व्यतिभेदात् सावयवः, सावयवत्वाच्चानित्य इति ॥१८॥

[**वा** पृः ४८०; **टी** पृः ६१६; **प** पृः ५४८]

**आकाशासर्वगतत्वं वा ॥४।२।१९॥**

अथैतन्नेष्यते परमाणोरन्तर्नास्त्याकाशमित्यसर्वगतत्वं प्रसज्यत इति ॥१९॥

[**वा** पृः ४८०; **टी** पृः ६१६; **प** पृः ५४८]

**अन्तर्बहिरिति[1] कार्यद्रव्यस्य कारणान्तरवचनादकार्ये तदभावः ॥४।२।२०॥**

---

१. र्बहिश्च TC, र्बहिरिति Alaṃkāra

अन्तरिति व्यवहितं[१] कारणान्तरैः कारणमुच्यते। बहिरिति च व्यवधायकम् अव्यवहितं कारणमेवोच्यते। तदेतत्कार्यद्रव्यस्य सम्भवति, नाणोरकार्यत्वात्। अकार्ये हि परमाणावन्तर्बहिरित्यस्याभावः। यत्र चास्य भावोऽणुकार्यं तत्, न परमाणुः। यतो हि नाल्पतरमस्ति स परमाणुरिति॥२०॥

[**वा** पृः ४८१; **टी** पृः ६१७; **प** पृः ५४९]

## शब्दसंयोगविभवाच्च सर्वगतम् ॥४।२।२१॥

यत्र क्वचिदुत्पन्नाः शब्दा विभवन्त्याकाशे तदाश्रया भवन्ति। मनोभिः परमाणुभिस्तत्कार्यैश्च संयोगा विभवन्त्याकाशे। नासंयुक्तमाकाशेन किञ्चिन्मूर्त-द्रव्यमुपलभ्यते, तस्मान्नासर्वगतमिति॥२१॥

[**वा** पृः ४८१; **टी** पृः ६१७; **प** पृः ५४९]

## अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्माः॥४।२।२२॥

सर्पता[२] प्रतिघातिना द्रव्येण न व्यूह्यते, यथा काष्ठेनोदकम्। कस्मात्? निरवयवत्वात्। सर्पच्च प्रतिघातिद्रव्यं[३] न विष्टभ्नाति आकाशम्[४], नास्य क्रियाहेतुं गुणं प्रतिबध्नाति। कस्मात्? अस्पर्शत्वात्। विपर्यये हि विष्टम्भो दृष्ट इति। स भवान् सावयवे स्पर्शवति[५] द्रव्ये दृष्टं धर्मं विपरीते नाशङ्कितुमर्हतीति।

अण्ववयवस्य चाणुतरत्वप्रसङ्गादणुकार्यप्रतिषेधः। सावयवत्वे चाणोरण्ववय-

---

१. पिहितं TC २. संसर्पता TC ३. द्रव्यं Om C ४. आकाशम् J only ५. स्पर्शवति J only

वोऽणुतर इति प्रसज्यते। कस्मात्? कार्यकारणद्रव्ययोः परिमाणभेददर्शनात्। तस्मादण्ववयवस्याणुतरस्याणुत्वम्, यस्तु सावयवोऽणुकार्यं तदिति। तस्मादणुकार्यमिदं प्रतिषिध्यत इति

कारणविभागाच्च कार्यद्रव्यस्यानित्यत्वम्, नाकाशव्यतिभेदात्। लोष्टस्यावयवविभागादनित्यत्वम्, नाकाशसमावेशादिति॥२२॥

[**वा** पृः ४८२; **टी** पृः ६१७; **प** पृः ५४९]

## मूर्त्तिमतां च संस्थानोपपत्तेरवयवसद्भावः॥४।२।२३॥

परिच्छिन्नानां द्रव्याणां[१] स्पर्शवतां संस्थानं त्रिकोणं चतुरस्रं समं[२] परिमण्डलमित्युपपद्यते। यत् तत् संस्थानं सोऽवयवसन्निवेशविशेषः[३]। परिमण्डलाश्चाणवस्तस्मात् सावयवा इति॥२३॥

[**वा** पृः ४८२; **टी** पृः ६१८; **प** पृः ५४९]

## संयोगोपपत्तेश्च॥४।२।२४॥

मध्ये सन्नणुः पूर्वापराभ्यामणुभ्यां संयुक्तस्तयोर्व्यवधानं कुरुते व्यवधानादनुमीयते पूर्वभागेन पूर्वेणाणुना संयुज्यते अपरभागेन चापरेणाणुना संयुज्यते। यौ तौ पूर्वापरौ भागौ तावस्यावयवौ। एवं सर्वतः संयुज्यमानस्य सर्वतो भागा अवयवा इति।

यत् तावन्मूर्तिमतां संस्थानोपपत्तेरवयवसद्भाव इति अत्रोक्तम्, किमुक्तम्?

---

१. द्रव्याणां J only २. समं Om J ३. विशेष Om TC

विभागेऽल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्रावस्थानादण्ववयवस्य चाणुतरत्वप्रसङ्गादणुकार्यप्रतिषेध इति।

यत् पुनरेतत्—संयोगोपपत्तेश्चेति? स्पर्शवत्त्वाद् व्यवधानमाश्रयस्य चाव्याप्त्या भागभक्तिः। उक्तं चात्र स्पर्शवानणुः स्पर्शवतोरण्वोः प्रतिघाताद् व्यवधायको न सावयवत्वात्। स्पर्शवत्त्वाच्च व्यवधाने सत्यणुसंयोगो नाश्रयं व्याप्नोतीति भागभक्तिर्भवतीति भागवानिवायमिति। उक्तं चात्र—विभागेऽल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्रावस्थानात् तदवयवस्य चाणुतरत्वप्रसङ्गादणुकार्यप्रतिषेध इति ॥२४॥

[**वा** पृः ४८२; **टी** पृः ६१८; **प** पृः ५४९]

मूर्त्तिमतां च संस्थानोपपत्तेः संयोगोपपत्तेश्च परमाणूनां सावयवत्वमिति हेत्वोः[१]—

**अनवस्थाकारित्वादनवस्थानुपपत्तेश्चाप्रतिषेधः ॥४।२।२५॥**

यावन्मूर्त्तिमद् यावच्च संयुज्यते तत्सर्वं सावयवमित्यनवस्थाकारिणाविमौ हेतू। सा चानवस्था नोपपद्यते। सत्यां चानवस्थायां सत्यौ हेतू स्याताम्। तस्मादप्रतिषेधोऽयं निरवयवत्वस्येति।

विभागस्य च विभज्यमानहानिर्नोपपद्यते। तस्मात् प्रलयान्तता नोपपद्यत इति।

अनवस्थायां च प्रत्यधिकरणं द्रव्यावयवानामानन्त्यात् परिमाणभेदस्य गुरुत्वस्य चाग्रहणं समानपरिमाणत्वं चावयवावयविनोः परमाण्ववयवविभागादूर्ध्वमिति ॥२५॥

॥निरवयवत्वप्रकरणम्॥

---

१. Alaṃkāra accepts हेत्वोः as the initial word of the following sūtra.

# [ बाह्यार्थभङ्गनिराकरणप्रकरणम् ]

[**वा** पृः ४८७; **टी** पृः ६२२; **प** पृः ५५०]

यदिदं भवान् बुद्धीराश्रित्य बुद्धिविषयाः सन्तीति मन्यते, मिथ्याबुद्धय एताः। यदि हि तत्त्वबुद्धयः स्युर्बुद्ध्या विवेचने क्रियमाणे याथात्म्यं बुद्धिविषयाणामुपलभ्येत?

**बुद्ध्या विवेचनात्तु भावानां याथात्म्यानुपलब्धिस्तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत् तदनुपलब्धिः ॥४।२।२६॥**

यथा अयं तन्तुरयं तन्तुरिति प्रत्येकं तन्तुबुद्ध्या[१] विविच्यमानेषु नार्थान्तरं किञ्चिदुपलभ्यते यत् पटबुद्धेर्विषयः स्यात्, याथात्म्यानुपलब्धेरसति विषये पटबुद्धिर्भवन्ती मिथ्याबुद्धिर्भवति एवं सर्वत्रेति॥२६॥

[**वा** पृः ४८७; **टी** पृः ६२२; **प** पृः ५५०]

**व्याहतत्वादहेतुः ॥४।२।२७॥**

यदि बुद्ध्या विवेचनं भावानां न तर्हि[२] सर्वभावानां याथात्म्यानुपलब्धिः। अथ सर्वभावानां याथात्म्यानुपलब्धिर्न बुद्ध्या विवेचनम्। भावानां बुद्ध्या विवेचनं भावानां याथात्म्यानुपलब्धिश्चेति व्याहन्यते। तदुक्तम्—

**अवयवावयविप्रसङ्गश्चैवमा प्रलयात्** [ ४।२।१५ ]

इति ॥२७॥

---

१. तन्तुषु TC	२. तर्हि J only

[**वा** पृः ४८८; **टी** पृः ६२३; **प** पृः ५५०]

**तदाश्रयत्वादपृथग्ग्रहणम्॥४।२।२८॥**

कार्यद्रव्यं कारणद्रव्याश्रितम्। तत्कारणेभ्यः पृथङ्नोपलभ्यते, विपर्यये पृथग्ग्रहणात्। यत्राश्रयाश्रितभावो नास्ति, तत्र पृथग्ग्रहणमिति। बुद्ध्या विवेचनात्तु भावानां पृथग्ग्रहणमतीन्द्रियेष्वणुषु। यदिन्द्रियेण गृह्यते तदेतया बुद्ध्या विविच्यमानमन्यदिति॥२८॥

[**वा** पृः ४८८; **टी** पृः ६२३; **प** पृः ५५०]

**प्रमाणतश्चार्थप्रतिपत्तेः॥४।२।२९॥**

बुद्ध्या विवेचनाद् भावानां याथात्म्योपलब्धिः यद् अस्ति यथा च, यन्नास्ति यथा च, तत् सर्वं प्रमाणत उपलब्ध्या सिध्यति। या च प्रमाणत उपलब्धिः, तद् बुद्ध्या विवेचनं भावानाम्। तेन सर्वशास्त्राणि सर्वकर्माणि सर्वे च शरीरिणां व्यवहारा व्याप्ताः। परीक्ष्यमाणो हि बुद्ध्याध्यवस्यति इदमस्तीदं नास्तीति। तत्र न सर्वभावानुपपत्तिः ॥२९॥

[**वा** पृः ४८८; **टी** पृः ६२४; **प** पृः ५५०]

**प्रमाणानुपपत्त्युपपत्तिभ्याम् ॥४।२।३०॥**

एवं च सति सर्वं नास्तीति नोपपद्यते। कस्मात्? प्रमाणानुपपत्त्युपपत्तिभ्याम्।

यदि सर्वं नास्तीति प्रमाणमुपपद्यते, सर्वं नास्तीत्येतद् व्याहन्यते। अथ प्रमाणं नोपपद्यते, सर्वं नास्तीत्यस्य कथं सिद्धिः? अथ प्रमाणमन्तरेण सिद्धिः सर्वमस्तीत्यस्य कथं न सिद्धिः?॥३०॥

[**वा** पृः ४८८; **टी** पृः ६२४; **प** पृः ५५१]

**स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः॥४।२।३१॥**

यथा स्वप्ने न विषयाः सन्त्यथ चाभिमानो भवति, एवं न प्रमाणानि प्रमेयाणि च सन्त्यथ च प्रमाणप्रमेयाभिमानो भवति॥३१॥

[**वा** पृः ४८९; **टी** पृः ६२४; **प** पृः ५५१]

**मायागन्धर्वनगरमृगतृष्णिकावद् वा ॥४।२।३२॥**

[**वा** पृः ४८९; **टी** पृः ६२४; **प** पृः ५५१]

**हेत्वभावादसिद्धिः॥४।२।३३॥**

स्वप्रान्ते विषयाभिमानवत् प्रमाणप्रमेयाभिमानो न पुनर्जागरितान्ते विषयोपलब्धिवदित्यत्र हेतुर्नास्तीति हेत्वभावादसिद्धिः। स्वप्नान्ते चासन्तो विषया उपलभ्यन्त इत्यत्रापि[१] हेत्वभावः।

---

१. अत्रापि Om J

प्रतिबोधेऽनुपलम्भादिति चेत्? प्रतिबोधविषयोपलम्भादप्रतिषेधः। यदि प्रतिबोधेऽनुपलम्भात् स्वप्ने विषया न सन्ति तर्हि य इमे प्रतिबुद्धेन विषया उपलभ्यन्ते ते उपलम्भात् सन्तीति। विपर्यये हि हेतुसामर्थ्यम्। उपलम्भात् सद्भावे सत्यनुपलम्भादभावः सिद्ध्यति। उभयथा त्वभावे नानुपलम्भस्य सामर्थ्यमस्ति, यथा प्रदीपस्याभावाद् रूपस्यादर्शनमिति तत्र भावेनाभावः समर्थ्यत इति।

स्वप्नान्तविकल्पे च हेतुवचनम्। स्वप्नविषयाभिमानवदिति ब्रुवता स्वप्नान्तविकल्पे हेतुर्वाच्यः। कश्चिद्धि स्वप्नो भयोपसंहितः, कश्चित् प्रमोदोपसंहितः, कश्चिदुभयविपरीतः, कश्चिच्च सुषुप्तः[1] स्वप्नमेव न पश्यतीति। निमित्तवतस्तु स्वप्नविषयाभिमानस्य निमित्तविकल्पाद् विकल्पोपपत्तिः॥३३॥

[**वा** पृः ४८९; **टी** पृः ६२५; **प** पृः ५५२]

**स्मृतिसङ्कल्पवच्च स्वप्नविषयाभिमानः॥४।२।३४॥**

पूर्वोपलब्धविषयः। यथा स्मृतिश्च सङ्कल्पश्च पूर्वोपलब्धविषयौ न तस्य प्रत्याख्यानाय कल्पेते, तथा स्वप्ने विषयग्रहणं पूर्वोपलब्धविषयं न तस्य प्रत्याख्यानाय कल्पत इति। एवं दृष्टविषयश्च[2] स्वप्नान्तो जागरितान्तेन। यः सुप्तः स्वप्नं पश्यति, स एव जाग्रत्स्वप्नदर्शनानि प्रतिसन्धत्ते। इदमद्राक्षमिति। तत्र जाग्रद्बुद्धिवृत्तिवशात्[3] स्वप्नविषयाभिमानो मिथ्येति व्यवसायः। सति च प्रतिसन्धाने या जाग्रतो बुद्धिवृत्तिस्तद्वशादयं व्यवसायः स्वप्नविषयाभिमानो मिथ्येति।

उभयाविशेषे तु साधनानर्थक्यम्। यस्य स्वप्नान्तजागरितान्तयोरविशेषस्तस्य स्वप्नविषयाभिमानवदिति साधनमनर्थकं तदाश्रयस्य प्रत्याख्यानादिति।

---

१. कदाचित् for कश्चिच्च सुप्तः TC २. एकदृष्टं JC var ३. बुद्धि Om J

अतस्मिंस्तदिति च व्यवसायः प्रधानाश्रयः अपुरुषे स्थाणौ यः पुरुष इति व्यवसायः, स प्रधानाश्रयः। न खलु पुरुषेऽनुपलब्धे पुरुष इत्यपुरुषे व्यवसायो भवति। एवं स्वप्नविषयस्य व्यवसायो हस्तिनमद्राक्षं पर्वतमद्राक्षमिति प्रधानाश्रयो भवितुमर्हतीति ॥३४॥

[**वा** पृः ४९२; **टी** पृः ६३२; **प** पृः ५५३]

एवं च सति—

**मिथ्योपलब्धेर्विनाशस्तत्त्वज्ञानात् स्वप्नविषयाभिमानप्रणाशवत् प्रतिबोधे ॥४।२।३५॥**

स्थाणौ पुरुषोऽयमिति व्यवसायो मिथ्योपलब्धिः, अतस्मिंस्तदिति ज्ञानम्। स्थाणौ स्थाणुरिति व्यवसायस्तत्त्वज्ञानम्। तत्त्वज्ञानेन च मिथ्योपलब्धिर्निवर्त्त्यते, नार्थः स्थाणुपुरुषसामान्यलक्षणः। यथा प्रतिबोधे या ज्ञानवृत्तिस्तया स्वप्नविषयाभिमानो निवर्त्त्यते, नार्थो विषयसामान्यलक्षणः, तथा मायागन्धर्वनगरमृगतृष्णिकाणामपि या बुद्धयोऽतस्मिंस्तदिति व्यवसायास्तत्राप्यनेनैव कल्पेन मिथ्योपलब्धिविनाशस्तत्त्वज्ञानान्नार्थप्रतिषेध इति।

उपादानवच्च मायादिषु मिथ्याज्ञानम्। प्रज्ञापनीयसरूपं च द्रव्यमुपादाय साधनवान्[१] परस्य मिथ्याध्यवसायं करोति सा माया, नीहारप्रभृतीनां नगरसारूप्यसन्निवेशविशेषे[२] दूरान्नगरबुद्धिरुत्पद्यते, विपर्यये तदभावात्। सूर्यमरीचिषु च भौमेनोष्मणा संसृष्टेषु स्पन्दमानेषूदकबुद्धिर्भवति सामान्यग्रहणात्, अन्तिकस्थस्य[३] विपर्यये तदभावात्। क्वचित् कदाचित् कस्यचिच्च भावान्नानिमित्तं मिथ्याज्ञानम्।

१. मन्त्रौषध्यादियुक्त ऐन्द्रिजालिकः J	२. नगर[स C]रूपसन्निवेशे T
३. अनन्तिकस्थस्यास्य J

दृष्टं च बुद्धिद्वैतं मायाप्रयोक्तुः परस्य च, दूरान्तिकस्थयोश्च गन्धर्वनगरमृगतृष्णिकासु, सुषुप्तप्रतिबुद्धयोश्च स्वप्नविषयेषु। तदेतत् सर्वस्याभावे निरुपाख्यतायां निरात्मकत्वे सर्वं[1] नोपपद्यत इति॥३५॥

[**वा** पृः ४९२; **टी** पृः ६३३; **प** पृः ५५३]

## बुद्धेश्चैवं निमित्तसद्भावोपलम्भात् ॥४।२।३६॥

मिथ्याबुद्धेश्चार्थवदप्रतिषेधः। कस्मात्? निमित्तोपलम्भात् सद्भावोपलम्भाच्च। उपलभ्यते हि[2] मिथ्याबुद्धेर्निमित्तम्। मिथ्याबुद्धिश्च प्रत्यात्ममुत्पन्ना गृह्यते संवेद्यत्वात्, तस्मात् मिथ्याबुद्धिरप्यस्तीति॥३६॥

[**वा** पृः ४९२; **टी** पृः ६३३; **प** पृः ५५३]

## तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः॥४।२।३७॥

तत्त्वं स्थाणुरिति। प्रधानं पुरुष इति। तत्त्वप्रधानयोरलोपाद् भेदात् स्थाणौ पुरुष इति मिथ्याबुद्धिरुत्पद्यते सामान्यग्रहणात्। एवं पताकायां बलाकेति, लोष्टे कपोत इति। न तु समाने विषये मिथ्याबुद्धीनां समावेशः, सामान्यग्रहणव्यवस्थानात्। यस्य तु निरात्मकं निरुपाख्यं सर्वं तस्य समावेशः प्रसज्यते।

गन्धादौ च प्रमेये गन्धादिबुद्धयो मिथ्याभिमतास्तत्त्वप्रधानयोः सामान्यग्रहणस्य चाभावात् तत्त्वबुद्धय एव भवन्ति। तस्मादयुक्तमेतत् प्रमाणप्रमेयबुद्धयो मिथ्येति॥३७॥

॥बाह्यार्थभङ्गनिराकरणप्रकरणम्॥

---

१. सर्वं J only २. हि Om J and C var

# [ तत्त्वज्ञानविवृद्धिप्रकरणम् ]

[**वा** पृः ४९३; **टी** पृः ६३४; **प** पृः ५५४]

दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिरित्युक्तम्। अथ कथं तत्त्वज्ञानमुत्पद्यत इति?

**समाधिविशेषाभ्यासात्॥४॥२॥३८॥**

स तु प्रत्याहृतस्येन्द्रियेभ्यो मनसो विधारकेण[१] प्रयत्नेन धार्यमाणस्यात्मना संयोगस्तत्त्वबुभुत्साविशिष्टः। सति हि तस्मिन्निन्द्रियार्थेषु बुद्धयो नोत्पद्यन्ते। तदभ्यासवशात् तत्त्वबुद्धिरुत्पद्यते॥३८॥

[**वा** पृः ४९३; **टी** पृः ६३४; **प** पृः ५५४]

यदुक्तं सति हि तस्मिन्निन्द्रियार्थेषु बुद्धयो नोत्पद्यन्त इत्येतत्—

**नार्थविशेषप्राबल्यात्॥४॥२॥३९॥**

अनिच्छतोऽपि बुद्ध्युत्पत्तेर्नैतद् युक्तम्। कस्मात्? अर्थविशेषप्राबल्यात्। अबुभुत्समानस्यापि बुद्ध्युत्पत्तिर्दृष्टा यथा[२] स्तनयित्नुशब्दप्रभृतिषु। तत्र[३] समाधिविशेषो नोपपद्यते॥३९॥

[**वा** पृः ४९४; **टी** पृः ६३५; **प** पृः ५५४]

**क्षुदादिभिः प्रवर्तनाच्च ॥४॥२॥४०॥**

---

१. धारकेण TC    २. यथा Om J    ३. एवं स्थिते J

क्षुत्पिपासाभ्यां शीतोष्णाभ्यां व्याधिभिश्चानिच्छतोऽपि बुद्धयः प्रवर्तन्ते। तस्मादैकाग्र्यानुपपत्तिरिति ॥४० ॥

[**वा** पृः ४९४; **टी** पृः ६३५; **प** पृः ५५४]

अस्त्वेतत् समाधिव्युत्थाननिमित्तं[1] समाधिप्रत्यनीकं च, सति त्वेतस्मिन्—

**पूर्वकृतफलानुबन्धात् तदुत्पत्तिः ॥४ ।२ ।४१ ॥**

पूर्वकृतो जन्मान्तरोपचितस्तत्त्वज्ञानहेतुर्धर्मप्रविवेकः। फलानुबन्धो योगाभ्याससामर्थ्यम्। निष्फले ह्यभ्यासे नाभ्यासमाद्रियेरन्। दृष्टं हि लौकिकेषु कर्मस्वभ्याससामर्थ्यम् ॥४१ ॥

[**वा** पृः ४९४; **टी** पृः ६३५; **प** पृः ५५५]

प्रत्यनीकपरिहारार्थं च—

**अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशः ॥४ ।२ ।४२ ॥**

योगाभ्यासजनितो धर्मो जन्मान्तरेऽप्यनुवर्तते[2]। प्रचयकाष्ठां गते तत्त्वज्ञानहेतौ धर्मे प्रकृष्टायां समाधिभावनायां तत्त्वज्ञानमुत्पद्यत इति। दृष्टश्च समाधिनार्थविशेषप्राबल्याभिभवः नाहमेतदश्रौषं नाहमेतदज्ञासिषमन्यत्र मे मनोऽभूदित्याह लौकिक इति ॥४२ ॥

[**वा** पृः ४९४; **टी** पृः ६३५; **प** पृः ५५५]

यद्यर्थविशेषप्राबल्यादनिच्छतोऽपि बुद्ध्युत्पत्तिरनुज्ञायते—

---

१. समाधिं विहाय व्युत्थानं व्युत्थाननिमित्तं for समाधिव्युत्थाननिमित्तं C २. जन्मान्तराण्यप्य° J

**अपवर्गेऽप्येवं प्रसङ्गः ॥४।२।४३॥**

मुक्तस्यापि बाह्यार्थसामर्थ्याद् बुद्धय उत्पद्येरन्निति[१] ॥४३॥

[**वा** पृः ४९४; **टी** पृः ६३६; **प** पृः ५५५]

नानिमित्तत उत्पत्तिः[२]—

**न, निष्पन्नावश्यम्भावित्वात् ॥४।२।४४॥**

कर्मवशान्निष्पन्ने शरीरे चेष्टेन्द्रियार्थाश्रये निमित्तभावाद् अवश्यम्भावी बुद्धीनामुत्पादः। न च प्रबलोऽपि सन् बाह्योऽर्थ आत्मनो बुद्ध्युत्पादे समर्थो भवति। तस्येन्द्रियेण संयोगाद् बुद्ध्युत्पादे सामर्थ्यं दृष्टमिति ॥४४॥

[**वा** पृः ४९५; **टी** पृः ६३६; **प** पृः ५५५]

**तदभावश्चापवर्गे ॥४।२।४५॥**

तस्य बुद्धिनिमित्ताश्रयस्य[३] शरीरेन्द्रियस्य[४] धर्माधर्माभावादभावोऽपवर्गे। तत्र यदुक्तम**पवर्गेऽप्येवं प्रसङ्ग [ ४।२।४३ ]** इति तदयुक्तम्।

तस्मात् सर्वदुःखविमोक्षोऽपवर्गः। यस्मात् सर्वदुःखबीजं सर्वदुःखायतनं[५] चापवर्गे विच्छिद्यते, तस्मात् सर्वेण दुःखेन विमुक्तिरपवर्गः। न निर्बीजं निरायतनं च दुःखमुत्पद्यत इति ॥४५॥

---

१. उत्पत्स्यन्त इति J २. ना...त्तिः J only ३. बुद्धिनिमित्तस्य J
४. शरीरस्य J ५. सर्व Om J

[**वा** पृ: ४९५; **टी** पृ: ६३६; **प** पृ: ५५६]

## तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः ॥४।२।४६॥

तस्यापवर्गस्याधिगमाय यमनियमाभ्यामात्मसंस्कारः कर्तव्यः[१]। यमः समानमाश्रमिणां धर्मसाधनम्। नियमस्तु विशिष्टम्[२]। आत्मसंस्कारः पुनरधर्महानं धर्मोपचयश्च। योगशास्त्राच्चाध्यात्मविधिः प्रतिपत्तव्यः। स पुनस्तपः प्राणायामः प्रत्याहारो धारणा ध्यानमिति। इन्द्रियविषयेषु च प्रसंख्यानाभ्यासो रागद्वेषप्रहाणार्थः[३]। उपायस्तु योगाचारविधानमिति ॥४६॥

[**वा** पृ: ४९५; **टी** पृ: ६३६; **प** पृ: ५५६]

## ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवादः ॥४।२।४७॥

तदर्थमिति प्रकृतम्। ज्ञायतेऽनेनेति ज्ञानम् अध्यात्मविद्याध्यात्मशास्त्रम्[४]। तस्य ग्रहणमध्ययनधारणे। अभ्यासः सततक्रियाध्ययनश्रवणचिन्तनानि। तद्विद्यैश्च सह संवाद इति प्रज्ञापरिपाकार्थम्। परिपाकस्तु संशयच्छेदनमविज्ञातार्थबोधोऽध्यवसिताभ्यनुज्ञानमिति। समयावादः[५] संवादः ॥४७॥

[**वा** पृ: ४९५; **टी** पृ: ६३७; **प** पृ: ५५६]

तद्विद्यैश्च सह संवाद इत्यविभक्तार्थं वचनं विभज्यते—

---

१. कर्तव्य J only २. प्रतिविशिष्टम् J ३. निर्घातार्थः for प्रहाणार्थः J
४. आत्मविद्याशास्त्रम् for अध्यात्मविद्याध्यात्मशास्त्रम् TC ५. समाय वादः J

**तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोऽर्थिभिरनसूयिभिरभ्युपेयात्॥४।२।४८॥**

एतन्निगदेनैव नीतार्थमिति।।४८॥

[**वा** पृः ४९६; **टी** पृः ६३७; **प** पृः ५५७]

यदि च मन्येत पक्षप्रतिपक्षपरिग्रहः प्रतिकूलः परस्येति—

**प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे॥४।२।४९॥**

तमभ्युपेयादिति वर्तते। परतः प्रज्ञामुपादित्समानस्तत्त्वबुभुत्साप्रकाशनेन स्वपक्षमनवस्थापयन् स्वदर्शनं परिशोधयेदिति। अन्योन्यप्रत्यनीकानि च प्रावादुकानां दर्शनानि।।४९॥

।।तत्त्वज्ञानविवृद्धिप्रकरणम्॥

## [ तत्त्वज्ञानपरिपालनप्रकरणम् ]

[**वा** पृः ४९६; **टी** पृः ६३८; **प** पृः ५५७]

स्वपक्षरागेण **चैके** न्यायमतिवर्तन्ते तत्र—

**तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत्॥४।२।५०॥**

अनुत्पन्नतत्त्वज्ञानानामप्रहीणदोषाणां तदर्थं घटमानानामेतदिति॥५०॥

[**वा** पृ: ४९६; **टी** पृ: ६३८; **प** पृ: ५५८]

विद्यानिर्वेदादिभिश्च परेणावज्ञायमानस्य—

**ताभ्यां[१] विगृह्य कथनम्॥४।२।५१॥**

विगृह्येति विजगीषया न तत्त्वज्ञानबुभुत्सयेति[२]। तदेतद् विद्यापरिपालनार्थम्, न लाभपूजाख्यात्यर्थमिति॥५१॥

॥तत्त्वज्ञानपरिपालनप्रकरणम्॥

॥अवसितं सभाष्ये न्यायदर्शने चतुर्थाध्यायस्य द्वितीयाह्निकम्॥

॥समाप्तश्चतुर्थोऽध्यायः॥

---

१. जल्पवितण्डाभ्यां J margin २. ज्ञान Om TC

# पञ्चमाध्यायस्य प्रथमाह्निकम्

## [ सत्प्रतिपक्षदेशनाभासप्रकरणम् ]

[**वा** पृः ४९७; **टी** पृः ६४१; **प** पृः ५५९]

साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिबहुत्वमिति संक्षेपेणोक्तम्[१]। तद्विस्तरेण विभज्यते। ताश्च[२] खल्विमा जातयः स्थापनाहेतौ प्रयुक्ते चतुर्विंशतिः प्रतिषेधहेतवः—

**साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणाहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्ध्यनित्यनित्यकार्यसमाः॥५।१।१॥**

साधर्म्येण प्रत्यवस्थानमविशिष्यमाणं स्थापनाहेतुतः साधर्म्यसमः। अविशेषं तत्र तत्रोदाहरिष्यामः। एवं वैधर्म्यसमप्रभृतयोऽपि निर्वक्तव्याः॥१॥

[**वा** पृः ४९८; **टी** पृः ६४३; **प** पृः ५६५]

लक्षणं तु—

**साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ॥५।१।२॥**

साधर्म्येणोपसंहारे साध्यधर्मविपर्ययोपपत्तेः साधर्म्येणैव[३] प्रत्यवस्थानम्

१. द्र. न्या. सू. १/२/२०  २. च Om TC  ३. एव Om J

[१]अविशिष्यमाणं स्थापनाहेतुतः साधर्म्यसमः [२]प्रतिषेधः।

निदर्शनम्, क्रियावान् आत्मा, द्रव्यस्य क्रियाहेतुगुणयोगात्। द्रव्यं लोष्टः क्रियाहेतुगुणयुक्तः क्रियावान्। तथा चात्मा। तस्मात् क्रियावानिति।

एवमुपसंहृते परः साधर्म्येणैव प्रत्यवतिष्ठते—निष्क्रिय आत्मा विभुत्वात्[३]। विभुनो द्रव्यस्य निष्क्रियत्वात्। विभु चाकाशं निष्क्रियं च। तथा चात्मा। तस्मान्निष्क्रिय इति।

न चास्ति विशेषहेतुः क्रियावत्साधर्म्यात् क्रियावता भवितव्यम्, न पुनर्निष्क्रियसाधर्म्यान्निष्क्रियेणेति। विशेषहेत्वभावात् साधर्म्यसमः प्रतिषेधो[४] भवति।

अथ वैधर्म्यसमः। क्रियाहेतुगुणयुक्तो लोष्टः परिच्छिन्नो[५] दृष्टः। न च तथात्मा। तस्मान्न लोष्टवत् क्रियावानिति। न चास्ति विशेषहेतुः क्रियावत्साधर्म्यात् क्रियावता भवितव्यम्, न पुनः क्रियावद्वैधर्म्यादक्रियावतेति[६], विशेषहेत्वभावाद् वैधर्म्यसमः।

वैधर्म्येण चोपसंहारो निष्क्रिय आत्मा विभुत्वात्। क्रियावद् द्रव्यमविभु दृष्टम्। यथा लोष्टः। न च तथात्मा। तस्मान्निष्क्रिय इति। वैधर्म्येणैव[७] प्रत्यवस्थानम्—निष्क्रियं द्रव्यमाकाशं क्रियाहेतुगुणरहितं[८] दृष्टम्। न च तथात्मा। तस्मान्न निष्क्रिय इति। न चास्ति विशेषहेतुः क्रियावद्वैधर्म्यान्निष्क्रियेण भवितव्यम्। न पुनर्निष्क्रियवैधर्म्यात्[९] क्रियावतेति। विशेषहेत्वभावाद् वैधर्म्यसमः।

अथ साधर्म्यसमः। क्रियावान् लोष्टः क्रियाहेतुगुणयुक्तो दृष्टः। तथा चात्मा। तस्मात् क्रियावानिति। न चास्ति विशेषहेतुः[१०] क्रियावद्वैधर्म्यान्निष्क्रियो न पुनः क्रियावत्साधर्म्यात् क्रियावानिति विशेषहेत्वभावात् साधर्म्यसमः॥२॥

---

१. अविशिष्यमाणं स्थापनाहेतुतः Om J २. प्रतिषेधः Om J ३. विभुत्वात् Om TC ४. प्रतिषेधः Om J ५. मूर्तो J ६. °दक्रियेणेति TC ७. एव Om TC ८. °गुणहीनं J ९. पुनरक्रियवै° TC १०. विशेषः J

[**वा** पृ: ४९९; **टी** पृ: ६४४; **प** पृ: ५६७]

अनयोरुत्तरम्—

**गोत्वाद्गोसिद्धिवत्तत्सिद्धिः ॥५।१।३॥**

साधर्म्यमात्रे वैधर्म्यमात्रे[१] च साध्यसाधने प्रतिज्ञायमाने स्यादव्यवस्था[२]। सा तु धर्मविशेषे नोपपद्यते। गोसाधर्म्याद्धि[३] गोत्वाज्जातिविशेषाद् गौः सिध्यति। न तु सास्नादिसंबन्धात्। अश्वादिवैधर्म्याच्च[४] गोत्वादेव गौः सिध्यति, न तु[५] गुणादिभेदात्। तच्चैतत् [६]कृतव्याख्यानमवयवप्रकरणे[७]। प्रमाणानामभिसम्बन्धाच्चैकार्थकारित्वं समानं वाक्ये। हेत्वाभासाश्रया [८]तु खल्वियमव्यवस्थेति ॥३॥

।सत्प्रतिपक्षदेशनाभासप्रकरणम्]

## [ साध्यदृष्टान्तधर्मविकल्पप्रभवोत्कर्षसमादि-जातिषट्कप्रकरणम् ]

[**वा** पृ: ५००; **टी** पृ: ६४४; **प** पृ: ५६८]

**साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः ॥५।१।४॥**

दृष्टान्तधर्मं साध्ये समासञ्जयत[९] उत्कर्षसमः। यदि क्रियाहेतुगुणयोगाल्लोष्टवत्

---

१. °मात्रेण...त्रेण C  २. स्यादियमव्य° TJ  ३. हि Om TC
४. च Om TC  ५. तु J only  ६. कृतव्यवस्थान° J  ७. द्र: न्या. भा. १.१.३९  ८. तु Om TC  ९. °सजतः J

तस्मादयुक्तमेतदप्रामाण्यमिति। अप्रामाण्ये च धर्मशास्त्रस्य प्राणभृतां व्यवहारलोपाल्लोकोच्छेदप्रसङ्गः।

द्रष्टृप्रवक्तृसामान्याच्चाप्रामाण्यानुपपत्तिः। य एव मन्त्रब्राह्मणस्य द्रष्टारः प्रवक्तारश्च ते खल्वितिहासपुराणस्य धर्मशास्त्रस्य चेति।

विषयव्यवस्थानाच्च यथाविषयं प्रामाण्यम्। अन्यो मन्त्रब्राह्मणस्य विषयोऽन्यश्चेतिहासपुराणधर्मशास्त्राणामिति। यज्ञो मन्त्रब्राह्मणस्य, लोकवृत्तमितिहासपुराणस्य लोकव्यवहारव्यवस्थानं धर्मशास्त्रस्य विषयः। [1]तत्रैकेन न सर्वं व्यवस्थाप्यत इति यथाविषयमेतानि प्रमाणानीन्द्रियादिवदिति ॥६२॥

[**वा** पृः ४६७; **टी** पृः ६०१; **प** पृः ५३८]

यत् पुनरेतत् क्लेशानुबन्धस्याविच्छेदादिति, अत्रोच्यते[2]—

**सुषुप्तस्य स्वप्नादर्शने क्लेशाभाववदपवर्गः ॥४।१।६३॥**

यथा सुषुप्तस्य खलु स्वप्नादर्शने रागाद्यनुबन्धः सुखदुःखाद्यनुबन्धश्च विच्छिद्यते, तथापवर्गेऽपीति। एतच्च ब्रह्मविदो मुक्तस्यात्मनो रूपमुदाहरन्तीति ॥६३॥

[**वा** पृः ४६७; **टी** पृः ६०१; **प** पृः ५३८]

यदपि प्रवृत्त्यनुबन्धादिति—

**न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य ॥४।१।६४॥**

प्रक्षीणेषु रागद्वेषमोहेषु सती[3] प्रवृत्तिर्न प्रतिसन्धानाय। प्रतिसन्धिस्तु

१. न चैकेन सर्वं प्रज्ञाप्यत J  २. अत्रोच्यते J only  ३. सती J only

पूर्वजन्मनिवृत्तौ पुनर्जन्म। [१]एतच्च जन्म तृष्णाकारितम्। तस्यां प्रहीणायां पूर्वजन्माभावे [२]पुनर्जन्माभावोऽप्रतिसन्धानमपवर्ग इति। कर्मवैफल्यप्रसङ्ग इति चेत्—न, कर्मविपाकप्रतिसंवेदनस्याप्रत्याख्यानात्। पूर्वजन्मनिवृत्तौ पुनर्जन्म न भवतीत्युच्यते, न तु कर्मविपाकप्रतिसंवेदनं प्रत्याख्यायते। सर्वाणि पूर्वकर्माणि ह्यन्ते जन्मनि विपच्यन्त इति ॥६४॥

[**वा** पृ: ४६८; **टी** पृ: ६०२; **प** पृ: ५३९]

**न, क्लेशसन्ततेः स्वाभाविकत्वात्॥४।१।६५॥**

नोपपद्यते क्लेशानुबन्धविच्छेदः। कस्मात्? क्लेशसन्ततेः स्वाभाविकत्वात्। अनादिरियं क्लेशसन्ततिः। न चानादिः शक्य उच्छेतुमिति ॥६५॥

[**वा** पृ: ४६८; **टी** पृ: ६०२; **प** पृ: ५३९]

अत्र **कश्चित्** परीहारमाह—

**प्रागुत्पत्तेरभावानित्यत्ववत् स्वाभाविकेऽप्यनित्यत्वम्॥४।१। ६६॥**

यथानादिः प्रागुत्पत्तेरभाव [३]उत्पन्नेन भावेन निवर्त्यत इत्यनित्यः[४], एवं स्वाभाविकी क्लेशसन्ततिरनित्येति ॥६६॥

१. तच्चादृष्टकारितम् C; तच्च तृष्णाकारितम् T; एतच्च...म् J　२. जन्मान्तराभावो for पुनर्जन्माभावो TC　३. उत्पत्तौ J　४. इत्यनित्यः J only

क्रियावान् आत्मा, लोष्टवदेव स्पर्शवानपि प्राप्नोति। अथ न स्पर्शवान् लोष्टवत्[१] क्रियावानपि न प्राप्नोति। विपर्यये वा विशेषो वाच्य[२] इति।

साध्ये धर्माभावं दृष्टान्तात् [३]प्रसञ्जयतोऽपकर्षसमः। लोष्टः खलु क्रियावानविभुर्दृष्टः। काममात्मापि क्रियावानविभुरस्तु। विपर्यये वा [४]विशेषो वक्तव्य इति।

ख्यापनीयो वर्ण्यः, विपर्ययादवर्ण्यः। तावेतौ साध्यदृष्टान्तधर्मौ विपर्यस्यतो वर्ण्यावर्ण्यसमौ भवतः। यथा आत्मा वर्ण्यः, कामं लोष्टोऽपि वर्ण्य एवास्तु। अथ लोष्टो न वर्ण्यः, कामम् आत्माप्येवमस्तु इति। विपर्यये वा विशेषवचनम्[५]।

साधनधर्मयुक्ते दृष्टान्ते[६] धर्मान्तरविकल्पात् साध्ये धर्मविकल्पं प्रसञ्जयतः[७] विकल्पसमः। क्रियाहेतुगुणयुक्तं किञ्चिद् गुरु, यथा लोष्टः। किञ्चिल्लघु, यथा वायुः। एवं क्रियाहेतुगुणयुक्तं किञ्चित् क्रियावत् स्यात्, यथा लोष्टः। किञ्चिदक्रियम्, यथात्मा। विशेषो वा वाच्य इति।

हेत्वाद्यवयवसामर्थ्ययोगी धर्मः साध्यः। तं दृष्टान्ते प्रसञ्जयतः[८] साध्यसमः। यदि यथा लोष्टस्तथा आत्मा, प्राप्तस्तर्हि यथा आत्मा तथा लोष्ट इति। साध्यश्चायमात्मा क्रियावानिति कामं लोष्टोऽपि साध्यः। अथ नैवम्, न तर्हि यथा लोष्टस्तथा आत्मा॥४॥

[**वा** पृः ५००; **टी** पृः ६४५; **प** पृः ५७०]

एतेषामुत्तरम्—

**किञ्चित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः॥५।१।५॥**

---

१. तद्वत् J  २. वक्तव्यः TC  ३. प्रसजतः J  ४. विशेषवचनम् for विशेषो वक्तव्यः J  ५. यथा आत्मा....विशेषवचनम् only in J  ६. दृष्टान्ते Om J  ७, ८. प्रसजतः J

अलभ्यः सिद्धस्य निह्नवः। सिद्धं च किञ्चित्साधर्म्यादुपमानम्। यथा गौस्तथा गवय इति। तत्र न लभ्यो गोगवययोर्धर्मविकल्पश्चोदयितुम्। एवं साधके धर्मे दृष्टान्तादिसामर्थ्ययुक्ते न लभ्यः साध्यदृष्टान्तयोर्धर्मविकल्पाद् वैधर्म्यात् प्रतिषेधो वक्तुमिति ॥५ ॥

[**वा** पृः ५०१; **टी** पृः ६४६; **प** पृः ५७०]

**साध्यातिदेशाच्च दृष्टान्तोपपत्तेः ॥५ ॥१ ॥६ ॥**

यत्र लौकिकपरीक्षकाणां बुद्धिसाम्यं[१] तेनाविपरीतोऽर्थोऽतिदिश्यते प्रज्ञापनार्थम्। एवं साध्यातिदेशाद् दृष्टान्ते उपपद्यमाने साध्यत्वमनुपपन्नमिति ॥६ ॥

॥जातिषट्कप्रकरणम्॥

## [ प्राप्त्यप्राप्तियुगनद्धवाहिविकल्पोपक्रमजातिद्वयप्रकरणम् ]

[**वा** पृः ५०२; **टी** पृः ६४७; **प** पृः ५७०]

**प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याविशिष्टत्वादप्राप्त्याऽसाधकत्वाच्च प्राप्त्यप्राप्तिसमौ ॥५ ॥१ ॥७ ॥**

हेतुः प्राप्य वा साध्यं साधयेदप्राप्य वा? [२]न तावत् प्राप्य, प्राप्त्यामविशिष्टत्वादसाधकः। द्वयोर्विद्यमानयोः प्राप्तौ सत्यां किं कस्य साधकं साध्यं वा? अप्राप्य च[३] साधकं न भवति। नाप्राप्तः प्रदीपः प्रकाशयतीति। प्राप्त्या प्रत्यवस्थानं प्राप्तिसमः। अप्राप्त्या प्रत्यवस्थानमप्राप्तिसमः ॥७ ॥

---

१. बुद्धेरभेदः J  २. तत्र तावत्प्राप्त्याम° J  ३. च Om TC

[**वा** पृः ५०२; **टी** पृः ६४८; **प** पृः ५७१]

अनयोरुत्तरम्—

**घटादिनिष्पत्तिदर्शनात् पीडने चाभिचारादप्रतिषेधः ॥५।१।८॥**

उभयथा खल्वयुक्तः प्रतिषेधः। कर्तृकरणाधिकरणानि प्राप्य मृदं घटादिकार्यं निष्पादयन्ति। अभिचाराच्च पीडने सति दृष्टमप्राप्य साधकत्वमिति ॥८॥

॥प्राप्त्यप्राप्तियुगनद्धवाहिविकल्पोपक्रमजातिद्वयप्रकरणम्॥

## [ प्रसङ्गप्रतिदृष्टान्तसमजातिद्वयप्रकरणम् ]

[**वा** पृः ५०३; **टी** पृः ६४८; **प** पृः ५७२]

**दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ ॥५।१।९॥**

साधनस्यापि साधनं वाच्यमिति प्रसङ्गेन प्रत्यवस्थानं प्रसङ्गसमः [१]प्रतिषेधः। क्रियाहेतुगुणयोगात् क्रियावान् लोष्ट इति हेतुर्नापदिश्यते। न च हेतुमन्तरेण सिद्धिरस्तीति।

प्रतिदृष्टान्तेन प्रत्यवस्थानं प्रतिदृष्टान्तसमः। क्रियावानात्मा क्रियाहेतुगुणयोगात्, लोष्टवद्[२] इत्युक्ते प्रतिदृष्टान्त उपादीयते, क्रियाहेतुगुणयुक्तमाकाशं निष्क्रियं दृष्टमिति। कः पुनराकाशस्य क्रियाहेतुर्गुणः? वायुना संयोगः संस्कारापेक्षः, वायुवनस्पतिसंयोगवदिति ॥९॥

---

१. प्रतिषेधः Om J  २. लोष्टवद् Om J

[**वा** पृ: ५०४; **टी** पृ: ६४९; **प** पृ: ५७२]

अनयोरुत्तरम्—

## प्रदीपोपादानप्रसङ्गविनिवृत्तिवत्तद्विनिवृत्तिः ॥५।१।१०॥

इदं तावदयं पृष्टो वक्तुमर्हति, अथ के प्रदीपमुपाददते, किमर्थं वेति? दिदृक्षमाणा दृश्यदर्शनार्थमिति। अथ प्रदीपं दिदृक्षमाणाः प्रदीपान्तरं कस्मान्नोपाददते? अन्तरेणापि प्रदीपान्तरं दृश्यते प्रदीपः। तत्र प्रदीपदर्शनार्थं प्रदीपोपादानं[१] निरर्थकमिति। अथ दृष्टान्तः किमर्थमुच्यत इति? अप्रज्ञातस्य ज्ञापनार्थमिति। अथ दृष्टान्ते[२] कारणापदेशः किमर्थं देश्यते[३]। यदि प्रज्ञापनार्थम्, [४]प्रज्ञातो दृष्टान्तः। स खलु—

**लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः**[५] इति। तत्र प्रज्ञापनार्थः[६] कारणापदेशो निरर्थक इति प्रसङ्गसमस्योत्तरम्॥१०॥

[**वा** पृ: ५०४; **टी** पृ: ६४९; **प** पृ: ५७२]

अथ प्रतिदृष्टान्तसमस्योत्तरम्—

## प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः ॥५।१।११॥

प्रतिदृष्टान्तं ब्रुवता न विशेषहेतुरपदिश्यते। अनेन [७]प्रकारेण प्रतिदृष्टान्तसाधको न दृष्टान्त इति। एवं प्रतिदृष्टान्तहेतुत्वे च[८] नाहेतुर्दृष्टान्त इत्युपपद्यते। स च कथमहेतुर्न स्यात्? यद्यप्रतिषिद्धः साधकः स्यादिति॥११॥

॥प्रसङ्गप्रतिदृष्टान्तसमजातिद्वयप्रकरणम्॥

१. तद्दर्शनार्थमुपादा° for तत्र...नं J २. °न्तस्य J ३. चोद्यते J ४. नाज्ञातो J
५. न्या. सू. १।१।२५ ६. तत्र प्रज्ञापनार्थं J ७. कारणेन J ८. च Om TC

## [ अनुत्पत्तिसमप्रकरणम् ]

[**वा** पृ: ५०५; **टी** पृ: ६५०; **प** पृ: ५७२]

**प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः ॥५।१।१२॥**

अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदित्युक्ते अपर आह, प्रागुत्पत्तेरनुत्पन्ने शब्दे प्रयत्नानन्तरीयकत्वमनित्यत्वे कारणं[1] नास्ति। तदभावान्नित्यत्वं प्राप्तम्। नित्यस्य चोत्पत्तिर्नास्ति। अनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमः॥१२॥

[**वा** पृ: ५०५; **टी** पृ: ६५०; **प** पृ: ५७२]

अस्योत्तरम्—

**तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः ॥५।१।१३॥**

तथाभावादुत्पन्नस्येति। उत्पन्नः खल्वयं शब्द इति भवति। प्रागुत्पत्तेः शब्द एव नास्ति। उत्पन्नस्य शब्दभावात् शब्दस्य सतः प्रयत्नानन्तरीयकत्वमनित्यत्वे कारणमुपपद्यते। कारणोपपत्तेरयुक्तोऽयं दोषः[2] प्रागुत्पत्तेः कारणाभावादिति॥१३॥

॥अनुत्पत्तिसमप्रकरणम्॥

१. °त्वकारणं TC    २. कारणप्रतिषेध इति for दोषः J

# [ संशयसमप्रकरणम् ]

[**वा** पृः ५०६; **टी** पृः ६५२; **प** पृः ५७३]

**सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात् संशयसमः ॥५।१।१४॥**

अनित्यः शब्दः प्रयत्नानन्तरीयकत्वात् घटवदित्युक्ते हेतौ संशयेन प्रत्यवतिष्ठते, सति प्रयत्नानन्तरीयकत्वे अस्त्येवास्य नित्येन सामान्येन साधर्म्यमैन्द्रियकत्वम्। अस्ति च घटेनानित्येन। अतो नित्यानित्यसाधर्म्यादनिवृत्तः संशय इति॥१४॥

[**वा** पृः ५०७; **टी** पृः ६५२; **प** पृः ५७३]

अस्योत्तरम्—

**साधर्म्यात् संशये न संशयो वैधर्म्यादुभयथा वा [१]संशयेऽत्यन्तसंशयो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः ॥५।१।१५॥**

विशेषाद् वैधर्म्यादवधार्यमाणेऽर्थे पुरुष इति, न स्थाणुपुरुषसाधर्म्यात् संशयोऽवकाशं लभते। एवं वैधर्म्याद् विशेषात् प्रयत्नानन्तरीयकत्वादवधार्यमाणे शब्दस्यानित्यत्वे नित्यानित्यसाधर्म्यात् संशयोऽवकाशं न लभते। यदि वै लभेत, ततः स्थाणुपुरुषसाधर्म्यानुच्छेदात्[२] अत्यन्तं संशयः स्यात्। गृह्यमाणे च विशेषे

---

१. °शयप्रसङ्गो TC J  २. °छेद्यत्वात् J

नित्यं [१]साधर्म्यं संशयहेतुरिति नाभ्युपगम्यते। न हि गृह्यमाणे पुरुषस्य विशेषे स्थाणुपुरुषसाधर्म्यं संशयहेतुर्भवतीति ॥१५॥

॥संशयसमप्रकरणम्॥

## [ प्रकरणसमप्रकरणम् ]

[**वा** पृः ५०७; **टी** पृः ६५२; **प** पृः ५७४]

**उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसमः ॥५।१।१६॥**

उभयेन नित्येन चानित्येन च साधर्म्यात् पक्षप्रतिपक्षयोः प्रवृत्तिः प्रक्रिया। अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदित्येकः पक्षं प्रवर्तयति। द्वितीयश्च नित्यसाधर्म्यात् प्रतिपक्षं प्रवर्तयति, नित्यः शब्दः श्रावणत्वात् शब्दत्ववदिति। एवं च सति प्रयत्नानन्तरीयकत्वादिति हेतुरनित्यसाधर्म्येणोच्यमानो न प्रकरणमतिवर्तते। प्रकरणानतिवृत्तेस्तु[२] निर्णयानिर्वर्तनम्[३]। समानं चैतन्नित्यसाधर्म्येणोच्यमाने हेतौ। तदिदं [४]प्रकरणानतिवृत्त्या प्रत्यवस्थानं प्रकरणसमः। समानं चैतद् वैधर्म्येऽपि[५]। उभयवैधर्म्यात् प्रक्रियासिद्धेः प्रकरणसम इति ॥१६॥

[**वा** पृः ५०८; **टी** पृः ६५३; **प** पृः ५७४]

अस्योत्तरम्—

**प्रतिपक्षात् प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः ॥५।१।१७॥**

१. सामान्यं J २. तु Om TC ३. °यानतिवर्त° C ४. तदिदं Om J
५. °र्म्येण J

उभयसाधर्म्यात् प्रक्रियासिद्धिं ब्रुवता प्रतिपक्षात् प्रक्रियासिद्धिरुक्ता भवति। यद्धि तदुभयसाधर्म्यं तत एकतरः प्रतिपक्ष इत्येवं सत्युपपन्नः प्रतिपक्षो भवति। प्रतिपक्षोपपत्तेरनुपपन्नः प्रतिषेधः। यदि प्रतिपक्षोपपत्तिः प्रतिषेधो नोपपद्यते, अथ प्रतिषेधोपपत्तिः प्रतिपक्षो नोपपद्यते। प्रतिपक्षोपपत्तिश्च प्रतिषेधोपपत्तिश्चेति विप्रतिषिद्धमिति। तत्त्वानवधारणाच्च प्रक्रियासिद्धिर्विपर्यये प्रकरणावसायात्। तत्त्वावधारणे ह्यवसितं प्रकरणं भवतीति॥१७॥

॥प्रकरणसमप्रकरणम्॥

## [ अहेतुसमप्रकरणम् ]

[**वा** पृः ५०८; **टी** पृः ६५५; **प** पृः ५७४]

**[१]त्रैकाल्यासिद्धेर्हेतोरहेतुसमः॥५।१।१८॥**

हेतुः साधनम्। तत् साध्यात् पूर्वं पश्चात् सह वा भवेत्। यदि पूर्वं साधनम्, असति साध्ये कस्य साधनम्? अथ पश्चात्, असति साधने कस्येदं साध्यम्? अथ युगपत्साध्यसाधने, द्वयोर्विद्यमानयोः किं कस्य साधनम्, किं कस्य साध्यमिति हेतुरहेतुना न विशिष्यते। अहेतुना साधर्म्यात्[२] प्रत्यवस्थानमहेतुसमः॥१८॥

[**वा** पृः ५०८; **टी** पृः ६५५; **प** पृः ५७४]

[३]अस्योत्तरम्—

**न हेतुतः साध्यसिद्धेस्त्रैकाल्यासिद्धिः॥५।१।१९॥**

१. ०ल्यानुपपत्ते० न्यायसूचीनिबन्धः २. अहेतुसाम्यात् J ३. अस्योत्तरम् Om J

न त्रैकाल्यासिद्धिः। कस्मात्? हेतुतः साध्यसिद्धेः। निर्वर्तनीयस्य च निर्वृत्ति-र्विज्ञेयस्य च विज्ञानमुभयं कारणतो दृश्यते। सोऽयं महान् प्रत्यक्षविषय उदाहरण-मिति। यत्तु खलूक्तम्—असति साध्ये कस्य साधनमिति? [१]यत् तन्निर्वर्त्यते, यच्च[२] विज्ञायते तस्येति॥१९॥

[**वा** पृः ५०८; **टी** पृः ६५५; **प** पृः ५७४]

**प्रतिषेधानुपपत्तेश्च प्रतिषेद्धव्याप्रतिषेधः॥५।१।२०॥**

पूर्वं पश्चाद् युगपद् वा प्रतिषेध इति नोपपद्यते, प्रतिषेधानुपपत्तेः स्थापनाहेतुः सिद्ध इति॥२०॥

॥अहेतुसमप्रकरणम्॥

## [ अर्थापत्तिसमप्रकरणम् ]

[**वा** पृः ५०९; **टी** पृः ६५५; **प** पृः ५७५]

**अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः॥५।१।२१॥**

अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदिति स्थापिते पक्षे अर्थापत्त्या प्रतिपक्षं [३]साधयतोऽर्थापत्तिसमः। यदि प्रयत्नानन्तरीयकत्वादनित्यसाधर्म्यादनित्यः शब्द इत्यर्थाद् [४]आपन्नं नित्यसाधर्म्यान्नित्य इति। अस्ति चास्य नित्येन साधर्म्यम् अस्पर्शत्वमिति॥२१॥

१. यत्तु नि TC २. विज्ञाप्यते TC ३. स्थापयतो॰ J ४. आपद्यते TC

[**वा** पृ: ५०९; **टी** पृ: ६५५; **प** पृ: ५७५]

अस्योत्तरम्—

**अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः ॥५।१।२२॥**

अनुपपाद्य सामर्थ्यमनुक्तमर्थादापद्यत इति ब्रुवतः पक्षहानेरुपपत्तिरनुक्तत्वात्। अनित्यपक्षसिद्धावर्थादापन्नं नित्यपक्षस्य हानिरिति।

अनैकान्तिकत्वाच्चार्थापत्तेः। उभयपक्षसमा चेयमर्थापत्तिः। यदि नित्यसाधर्म्यादस्पर्शत्वादाकाशवत्[1] नित्यः शब्दः, अर्थाद् आपन्नम्, अनित्यसाधर्म्यात् प्रयत्नानन्तरीयकत्वादनित्य इति। न चेयं विपर्ययमात्रादेकान्तेनार्थापत्तिः। न खलु वै घनस्य ग्राव्णः पतनमित्यर्थादापद्यते द्रवाणामपां पतनाभाव इति॥२२॥

॥अर्थापत्तिसमप्रकरणम्॥

## [ अविशेषसमप्रकरणम् ]

[**वा** पृ: ५०९; **टी** पृ: ६५६; **प** पृ: ५७५]

**एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात्सद्भावोपपत्तेरविशेषसमः ॥५।१।२३॥**

एको धर्मः प्रयत्नानन्तरीयकत्वं शब्दघटयोरुपपद्यत इत्यविशेषे उभयोरनित्यत्वे सर्वस्याविशेषः प्रसज्यते। कथम्? सद्भावोपपत्तेः। एको धर्मः सद्भावः

१. °वच्च TC

सर्वस्योपपद्यत इति[१] सद्भावोपपत्तेः सर्वाविशेषप्रसङ्गात् प्रत्यवस्थानमविशेषसमः ॥२३॥

[**वा** पृः ५१०; **टी** पृः ६५७; **प** पृः ५७५]

अस्योत्तरम्—

**क्वचित्तद्धर्मोपपत्तेः क्वचिच्चानुपपत्तेः प्रतिषेधाभावः ॥५।१। २४॥**

यथा साध्यदृष्टान्तयोरेकस्य धर्मस्य प्रयत्नानन्तरीयकत्वस्योपपत्तावनित्यत्वं[२] धर्मान्तरमविशेषः, नैवं सर्वभावानां सद्भावोपपत्तिनिमित्तं धर्मान्तरमस्ति येनाविशेषः स्यात्।

अथ मतमनित्यत्वमेव धर्मान्तरं सद्भावोपपत्तिनिमित्तं [३]सर्वभावानां स्यादिति। एवं खलु वै कल्प्यमाने अनित्याः सर्वे भावाः सद्भावोपपत्तेरिति पक्षः प्राप्नोति। तत्र प्रतिज्ञार्थव्यतिरिक्तमन्यद्[४] उदाहरणं नास्ति। अनुदाहृतश्च[५] हेतुर्नास्तीति। प्रतिज्ञैकदेशस्य चोदाहरणत्वमनुपपन्नम्। न हि[६] साध्यमुदाहरणं भवतीति[७]। सतश्च नित्यानित्यभावात् सद्भावाद्[८] अनित्यत्वानुपपत्तिः। तस्मात् सद्भावोपपत्तेः सर्वाविशेषप्रसङ्ग इति निरभिधेयमेतद्वाक्यमिति। सर्वभावानां च[९] सद्भावोपपत्तेरनित्यत्वमिति ब्रुवतानुज्ञातं शब्दस्यानित्यत्वम्। तत्रानुपपन्नः प्रतिषेध इति ॥२४॥

॥अविशेषसमप्रकरणम्॥

---

१. इति only in J  २. °पत्तेरनि° TC  ३. सर्वभावानां J; भावानां सर्वत्र TC  ४. अन्यत् Om J  ५. °दाहरणश्च TC  ६. च J  ७. इति Om C  ८. सद्भावात् J only  ९. च Om J

# [ उपपत्तिसमप्रकरणम् ]

[**वा** पृः ५१०; **टी** पृः ६५८; **प** पृः ५७६]

**उभयकारणोपपत्तेरुपपत्तिसमः ॥५ ।१ ।२५ ॥**

यद्यनित्यत्वकारणमुपपद्यते [१]शब्दस्येत्यनित्यः शब्दः, नित्यत्वकारणमप्युपपद्यतेऽस्यास्पर्शत्वमिति नित्यत्वमप्युपपद्यते। उभयस्यानित्यत्वस्य[२] नित्यत्वस्य च कारणोपपत्त्या प्रत्यवस्थानमुपपत्तिसमः ॥२५ ॥

[**वा** पृः ५१०; **टी** पृः ६५८; **प** पृः ५७६]

अस्योत्तरम्[३]—

**उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः ॥५ ।१ ।२६ ॥**

उभयकारणोपपत्तेरिति ब्रुवता नानित्यत्वकारणोपपत्तेरनित्यत्वं प्रतिषिध्यते। यदि प्रतिषिध्यते नोभयकारणोपपत्तिः स्यात्। उभयकारणोपपत्तिवचनाच्च खलु[४] अनित्यत्वकारणोपपत्तेरनित्यत्वम्[५] अभ्यनुज्ञायते। अभ्यनुज्ञानादनुपपन्नः प्रतिषेध इति।

व्याघातात् प्रतिषेध इति चेत्? समानो व्याघातः। एकस्य नित्यत्वानित्यत्वप्रसङ्गं व्याहतं ब्रुवतोक्तः प्रतिषेध इति चेत्? स्वपक्षपरपक्षयोः समानो व्याघातः। स च[६] नैकतरस्य साधक इति ॥२६ ॥

॥उपपत्तिसमप्रकरणम् ॥

---

१. शब्द Om J   २. च added J   ३. अस्यो....म् Om J   ४. °वचनादनित्य° TC   ५. °पत्तिर् TC   ६. च Om J

## [ उपलब्धिसमप्रकरणम् ]

[**वा** पृः ५११; **टी** पृः ६५८; **प** पृः ५७७]

**निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः ।।५ ।१ ।२७।।**

निर्दिष्टस्य प्रयत्नानन्तरीयकत्वस्यानित्यत्वकारणस्याभावेऽपि वायुनोदनाद् वृक्षशाखाभङ्गजस्य शब्दस्यानित्यत्वमुपलभ्यते। निर्दिष्टस्य [१]साधनस्याभावेऽपि साध्यधर्मोपलब्ध्या प्रत्यवस्थानमुपलब्धिसमः ।।२७ ।।

[**वा** पृः ५११; **टी** पृः ६५९; **प** पृः ५७७]

अस्योत्तरम्[२]—

**कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः ।।५ ।१ ।२८ ।।**

प्रयत्नानन्तरीयकत्वादिति ब्रुवता कारणत उत्पत्तिरियम्[३] अभिधीयते। न कार्यस्य कारणनियमः। यदि च कारणान्तरादप्युत्पद्यमानस्य शब्दस्य तदनित्यत्वमुपपद्यते, किमत्र प्रतिषिद्धं भवतीति[४] ।।२८ ।।

।।उपलब्धिसमप्रकरणम् ।।

---

१. साध्यधर्म्यकारणस्या° J  २. अस्यो..म् Om J  ३. °त्तिरभिधी° TC  ४. प्रतिषिध्यत इति TC

# [ अनुपलब्धिसमप्रकरणम् ]

[**वा** पृः ५१२; **टी** पृः ६६०; **प** पृः ५७७]

न प्रागुच्चारणाद् विद्यमानस्य शब्दस्यानुपलब्धिः। कस्मात्? आवरणाद्यनुपलब्धेः। यथा विद्यमानस्योदकादेरर्थस्यावरणादिभिरनुपलब्धिः, नैवं शब्दस्याग्रहणकारणेनावरणादिनानुपलब्धिः। गृह्येत चैतदस्याग्रहणकारणमुदकादिवत्, न तु[1] गृह्यते। तस्मादुदकादिविपरीतः शब्दोऽनुपलभ्यमान इति।

**तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः॥५।१।२९॥**

तेषामावरणादीनामनुपलब्धिर्नोपलभ्यते। अनुपलम्भान्नास्तीत्यभावोऽस्याः सिध्यति। अभावसिद्धौ हेत्वभावात् तद्विपरीतमस्तित्वमावरणादीनामुपपद्यते[2]। [3]तद्विपरीतोपपत्तेर्यत् प्रतिज्ञातम्, न प्रागुच्चारणाद् विद्यमानस्य शब्दस्यानुपलब्धिरित्येतन्न सिध्यति। सोऽयं हेतुरावरणाद्यनुपलब्धेरित्यावरणादिषु चावरणाद्यनुपलब्धौ च समयानुपलब्ध्या प्रत्यवस्थितोऽनुपलब्धिसमो भवतीति॥२९॥

[**वा** पृः ५१२; **टी** पृः ६६१; **प** पृः ५७७]

अस्योत्तरम्[4]—

**अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः॥५।१।३०॥**

---

१. तु Om TC
२. ॰मवधार्यते TC
३. तत् Om TC
४. अस्यो...म् Om J

आवरणाद्यनुपलब्धिर्नास्ति, अनुपलम्भादित्ययमहेतुः। कस्मात्? अनुपलम्भात्मकत्वादनुपलब्धेः। उपलम्भाभावमात्रत्वादनुपलब्धेः। यदस्ति तदुपलब्धेर्विषयः, उपलब्ध्या तदस्तीति [१]प्रतिज्ञायते। यन्नास्ति [२]तदनुपलब्धेर्विषयः। अनुपलभ्यमानं नास्तीति [३]प्रतिज्ञायते। सोऽयमावरणाद्यनुपलब्धेरनुपलम्भ उपलब्ध्यभावेऽनुपलब्धौ स्वविषये प्रवर्तमानो न स्वं विषयं प्रतिषेधति। अप्रतिषिद्धा चावरणाद्यनुपलब्धिर्हेतुत्वाय कल्पते। आवरणादीनि तु विद्यमानत्वादुपलब्धेर्विषयाः, तेषामुपलब्ध्या भवितव्यम्। यत् तानि नोपलभ्यन्ते, तदुपलब्धेः स्वविषयप्रतिपादिकाया अभावादनुपलम्भादनुपलब्धेर्विषयो[४] गम्यते, न सन्त्यावरणादीनि शब्दस्याग्रहणकारणानीति। अनुपलम्भात् त्वनुपलब्धिः सिध्यति, विषयः स तस्येति ॥३०॥

[**वा** पृः ५१२; **टी** पृः ६६२; **प** पृः ५७८]

## ज्ञानविकल्पानां च भावाभावसंवेदनादध्यात्मम्॥५।१।३१॥

अहेतुरिति वर्तते। शरीरे शरीरे शरीरिणां[५] ज्ञानविकल्पानां भावाभावौ संवेदनीयौ, अस्ति मे संशयज्ञानं नास्ति मे संशयज्ञानमिति। एवं प्रत्यक्षानुमानागमस्मृतिज्ञानेषु। सेयमावरणाद्यनुपलब्धिरुपलब्ध्यभावः स्वसंवेद्यः, नास्ति मे शब्दस्यावरणाद्युपलब्धिरिति, नोपलभ्यन्ते शब्दस्याग्रहणकारणान्यावरणादीनीति। तत्र यदुक्तं [६]तदनुपलब्धेरनुपलम्भादभावसिद्धिरिति, एतन्नोपपद्यते॥३१॥

॥अनुपलब्धिसमप्रकरणम्॥

---

१. प्रज्ञायते J २. सोऽनुप° J ३. प्रज्ञायते J ४. अनुपलम्भविष° J
५. शरीरिणां J only ६. तद् Om J

# [ अनित्यसमप्रकरणम् ]

[**वा** पृः ५१२; **टी** पृः ६६३; **प** पृः ५७८]

**साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः ॥५।१।३२॥**

अनित्येन घटेन साधर्म्यादनित्यः शब्द इति ब्रुवतोऽस्ति घटेनानित्येन सर्वभावानां साधर्म्यमिति सर्वस्यानित्यत्वमनिष्टं [१]प्रसज्यते। सोऽयमनित्यत्वेन प्रत्यवस्थानादनित्यसम इति ॥३२॥

[**वा** पृः ५१३; **टी** पृः ६६३; **प** पृः ५७८]

अस्योत्तरम्—

**साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाधर्म्यात् ॥५।१।३३॥**

प्रतिज्ञाद्यवयवयुक्तं वाक्यं पक्षनिवर्तकं प्रतिपक्षलक्षणं प्रतिषेधः। तस्य पक्षेण प्रतिषेध्येन साधर्म्यं प्रतिज्ञादियोगः। तद् यद्यनित्यसाधर्म्यादनित्यत्वस्यासिद्धिः, साधर्म्यादसिद्धेः [२]प्रतिषेधस्याप्यसिद्धिः प्रतिषेध्येन साधर्म्यादिति ॥३३॥

[**वा** पृः ५१३; **टी** पृः ६६४; **प** पृः ५७८]

**दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्मस्य हेतुत्वात्तस्य चोभयथाभावान्नाविशेषः ॥५।१।३४॥**

---

१. सम्पद्यते J  २. प्रतिषेधासिद्धिः J

दृष्टान्ते यः खलु धर्मः साध्यसाधनभावेन प्रज्ञायते, स हेतुत्वेनोपादीयते[१]। स चोभयथा भवति, केनचित् समानः, कुतश्चिद् विशिष्टः। सामान्यात् साधर्म्यं विशेषाच्च वैधर्म्यम्। एवं साधर्म्यविशेषो हेतुः, नाविशेषेण साधर्म्यमात्रं वैधर्म्यमात्रं वा। साधर्म्यमात्रं वैधर्म्यमात्रं चाश्रित्य भवानाह—

**साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः** इति। [२]तदेतदयुक्तमिति। अविशेषसमप्रतिषेधे च यदुक्तं [३]तदिहापि वेदितव्यमिति ॥३४॥

॥अनित्यसमप्रकरणम्॥

## [ नित्यसमप्रकरणम् ]

[**वा** पृः ५१४; **टी** पृः ६६४; **प** पृः ५७९]

**नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः ॥५।१।३५॥**

अनित्यः शब्दः इति प्रतिज्ञायते। तदनित्यत्वं किं शब्दे [४]नित्यमथानित्यम्? यदि तावत् सर्वदा भवति? धर्मस्य सर्वदा[५] भावाद् धर्मिणोऽपि [६]सर्वदा भाव इति नित्यः शब्दः। अथ न सर्वदा भवति? अनित्यत्वस्याभावान्नित्यः शब्दः। एवं नित्यत्वेन प्रत्यवस्थानान्नित्यसमः॥३५॥

[**वा** पृः ५१४; **टी** पृः ६६४; **प** पृः ५७९]

अस्योत्तरम्—

**प्रतिषेध्ये नित्यमनित्यभावादनित्येऽनित्यत्वोपपत्तेः प्रतिषेधाभावः॥५।१।३६॥**

---

१. ०नाभिधीयते TC २. तद् Om TC ३. इह Om TC ४. नित्यमनित्यं वा J ५. सदा TC ६. सदा TC

प्रतिषेध्ये शब्दे नित्यमनित्यत्वस्य भावादित्युच्यमानेऽनुज्ञातं शब्दस्यानित्यत्वम्। अनित्यत्वोपपत्तेश्च नानित्यः शब्द इति प्रतिषेधो नोपपद्यते। अथ नाभ्युपगम्यते[१] नित्यमनित्यत्वस्य भावादिति हेतुर्न भवतीति[२] हेत्वभावात् प्रतिषेधानुपपत्तिरिति।

उत्पन्नस्य च[३] निरोधादभावः शब्दस्यानित्यत्वम्, तत्र परिप्रश्नानुपपत्तिः। योऽयं परिप्रश्नः, तदनित्यत्वं किं शब्दे सर्वदा भवति अथ नेति, अयमनुपपन्नः। कस्मात्? उत्पन्नस्य यो निरोधादभावः शब्दस्य तदनित्यत्वम्। एवं च सत्यधिकरणाधेयविभागो[४] व्याघातान्नास्तीति। [५]नित्यानित्यत्वविरोधाच्च। नित्यत्वमनित्यत्वं चैकस्य धर्मिणो धर्माविति विरुध्येते, न संभवतः। तत्र यदुक्तम्—नित्यमनित्यत्वस्य भावान्नित्य[६] एव, [७]तदवर्तमानार्थमुक्तमिति॥३६॥

॥नित्यसमप्रकरणम्॥

## [ कार्यसमप्रकरणम् ]

[**वा** पृः ५१५; **टी** पृः ६६५; **प** पृः ५७९]

**प्रयत्नकार्यानेकत्वात् कार्यसमः॥५।१।३७॥**

प्रयत्नानन्तरीयकत्वादनित्यः शब्द इति। यस्य प्रयत्नानन्तरमात्मलाभस्तत्खल्वभूत्वा भवति, यथा घटादिकार्यम्। अनित्यमिति च भूत्वा न भवतीत्येतद् विज्ञायते। एवमवस्थिते प्रयत्नकार्यानेकत्वादिति प्रतिषेध उच्यते। प्रयत्नानन्तरमात्मलाभश्च दृष्टो घटादीनाम्। व्यवधानापोहाच्चाभिव्यक्तिर्व्यवहितानाम्। तत्किं

---

१. नाभ्यनुज्ञायते J २. इति Om J ३. च Om TC ४. ०ध्येयभावो J
५. ०त्यानित्यवि० J ६. इति for एव J ७. एतदविद्यमा० J

प्रयत्नानन्तरमात्मलाभः शब्दस्याहोस्विद्[१] अभिव्यक्तिरिति विशेषो नास्ति। कार्याविशेषेण प्रत्यवस्थानं कार्यसम इति॥३७॥

[**वा** पृ: ५१५; **टी** पृ: ६६७; **प** पृ: ५७९]

अस्योत्तरम्—

**कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः॥५।१।३८॥**

सति कार्यान्यत्वे अनुपलब्धिकारणोपपत्तेः प्रयत्नस्याहेतुत्वं शब्दस्याभिव्यक्तौ। यत्र प्रयत्नानन्तरमभिव्यक्तिस्तत्रानुपलब्धिकारणं व्यवधानमुपपद्यते। व्यवधानापोहाच्च प्रयत्नानन्तरभाविनोऽर्थस्योपलब्धिलक्षणा अभिव्यक्तिर्भवति। न तु शब्दस्यानुपलब्धिकारणं किञ्चिदुपपद्यते, यस्य प्रयत्नानन्तरमपोहाच्छब्दस्योपलब्धिलक्षणा अभिव्यक्तिर्भवतीति[२]। तस्मादुत्पद्यते शब्दो नाभिव्यज्यत इति॥३८॥

॥कार्यसमप्रकरणम्॥

## [ षट्पक्षीरूपकथाभासप्रकरणम् ]

[**वा** पृ: ५१६; **टी** पृ: ६६८; **प** पृ: ५८१]

हेतोश्चेदनैकान्तिकत्वमुपपाद्यते, अनैकान्तिकत्वादसाधकः स्यादिति। यदि चानैकान्तिकत्वादसाधकत्वम्[३]—

**प्रतिषेधेऽपि समानो दोषः॥५।१।३९॥**

---

१. °स्याहोऽभि° TC    २. °क्तिः स्यात् J    ३. °न्तिकमसाधनम् J

प्रतिषेधोऽप्यनैकान्तिकः। किञ्चित् प्रतिषेधति किञ्चिन्नेति अनैकान्तिकत्वादसाधक इति। अथवा शब्दस्यानित्यत्वपक्षे प्रयत्नानन्तरमुत्पादो नाभिव्यक्तिरिति विशेषहेत्वभावः। नित्यत्वपक्षेऽपि प्रयत्नानन्तरमभिव्यक्तिर्नोत्पाद इति विशेषहेत्वभावः। सोऽयमुभयपक्षसमो विशेषहेत्वभाव इत्युभयमप्यनैकान्तिकमिति॥३९॥

[**वा** पृः ५१६; **टी** पृः ६६८; **प** पृः ५८१]

**सर्वत्रैवम्॥५।१।४०॥**

सर्वेषु [१]साधर्म्यवैधर्म्यसमप्रभृतिषु प्रतिषेधहेतुषु यत्र यत्राविशेषश्चोद्यते[२] तत्र तत्रोभयोः पक्षयोः [३]समत्वं प्रसज्यत इति॥४०॥

[**वा** पृः ५१६; **टी** पृः ६६९; **प** पृः ५८१]

**प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः॥५।१।४१॥**

योऽयं प्रतिषेधेऽपि समानो दोषोऽनैकान्तिकत्वमापाद्यते[४], सोऽयं प्रतिषेधस्य विप्रतिषेधेऽपि समानः। तत्रानित्यः शब्दः प्रयत्नानन्तरीयकत्वादिति साधनवादिनः [५] स्थापनाहेतुना प्रथमः पक्षः। प्रयत्नकार्यानेकत्वात् कार्यसम इति [६]दूषणवादिनः प्रतिषेधहेतुना द्वितीयः पक्षः। स च [७]प्रतिषेधहेतुः प्रतिषेध इत्युच्यते। तस्यास्य [८]प्रतिषेधस्य प्रतिषेधेऽपि समानो [९]दोष इत्ययं तृतीयः पक्षो विप्रतिषेध उच्यते।

---

१. साधर्म्यप्रभृ॰ C; साधर्म्यसमप्रभृ॰ T २. ॰विशेषो दृश्यते TC ३. समः प्रस॰ TC ४. ॰त्वमित्युच्यते अयं J ५. हेतुना Om TC ६. दूषणवादिनः Om J ७. हेतुः प्रतिषेध Om TC ८. प्रतिषेधस्य Om TC ९. अयं Om TC

एतस्मिन् प्रतिषेधस्य विप्रतिषेधेऽपि [१]समानमनैकान्तिकत्वं [२]दोष इति चतुर्थः पक्षः ॥४१॥

[**वा** पृः ५१७; **टी** पृः ६६९; **प** पृः ५८१]

**प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गो मतानुज्ञा ॥५।१।४२॥**

प्रतिषेधं द्वितीयं पक्षं सदोषमभ्युपेत्य तदुद्धारमकृत्वा[३] अनुज्ञाय प्रतिषेधविप्रतिषेधे तृतीये पक्षे समानमनैकान्तिकत्वमिति समानं दूषणं प्रसञ्जयतो[४] दूषणवादिनो मतानुज्ञा प्रसज्यत इति पञ्चमः पक्षः ॥४२॥

[**वा** पृः ५१७; **टी** पृः ६६९; **प** पृः ५८१]

**स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात् समानो दोषः ॥५।१।४३॥**

स्थापनापक्षे प्रयत्नकार्यानेकत्वादिति दोषः स्थापनाहेतुवादिनः स्वपक्षलक्षणो भवति। [५]कस्मात्? स्वपक्षसमुत्थत्वात्। सोऽयं स्वपक्षलक्षणं दोषमपेक्षमाणोऽनुद्धृत्यानुज्ञाय

**प्रतिषेधेऽपि समानो दोषः**

इत्युपपद्यमानं दोषं परपक्षे उपसंहरति। इत्थं चानैकान्तिकः प्रतिषेध इति हेतुं

---

१. समानो दोषो॰ TC  २. दोष इति J  ३. अनुक्त्वा J  ४. प्रसजयतो J
५. कस्मात् Om J

निर्दिशति। तत्र स्वपक्षलक्षणापेक्षयोपपद्यमानदोषोपसंहारे हेतुनिर्देशे च सत्यनेन [१]परपक्षदोषोऽभ्युपगतो भवति। कथं कृत्वा? यः परेण प्रयत्नकार्यानेकत्वादिना अनैकान्तिकत्वं दोष[२] उक्तः, तमनुद्धृत्य

**प्रतिषेधेऽपि समानो दोषः**

इत्याह। एवं स्थापनां सदोषामभ्युपेत्य प्रतिषेधेऽपि[३] समानं दोषं प्रसञ्जयतः परपक्षाभ्युपगमात् समानो दोषो भवति। यथा परस्य प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधेऽपि[४] समानो दोषप्रसङ्गो मतानुज्ञा प्रसज्यत इति, तथास्यापि स्थापनां सदोषामभ्युपेत्य प्रतिषेधेऽपि समानं दोषं प्रसञ्जयतो मतानुज्ञा प्रसज्यत इति। स खल्वयं[५] षष्ठः पक्षः।

तत्र खलु स्थापनाहेतुवादिनः प्रथमतृतीयपञ्चमपक्षाः। प्रतिषेधहेतुवादिनो द्वितीयचतुर्थषष्ठपक्षाः। तेषां साध्वसाधुतायां मीमांस्यमानायां चतुर्थषष्ठयोरर्थाविशेषात् पुनरुक्तदोषप्रसङ्गः। चतुर्थपक्षे समानदोषत्वं परस्योच्यते—

**प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः**

इति। षष्ठेऽपि—

**परपक्षदोषाभ्युपगमात् समानो दोषः**

इति समानदोषत्वमेवोच्यते, नार्थविशेषः कश्चिदिति[६]। समानः तृतीयपञ्चमयोः पुनरुक्तदोषप्रसङ्गः। तृतीयपक्षेऽपि

**प्रतिषेधेऽपि समानो दोषः**

इति [७]समानदोषत्वमभ्युपगम्यते। पञ्चमेऽपि पक्षे[८],

**प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गः**

अभ्युपगम्यते। नार्थविशेषः कश्चिदुच्यत इति। तत्र पञ्चमषष्ठपक्षयोरर्थाविशेषात् पुनरुक्तदोषप्रसङ्गः[९]। तृतीयचतुर्थयोर्मतानुज्ञा, प्रथमद्वितीययोर्विशेषहेत्वभाव इति।

---

१. पक्षाभ्युप° J २. °क्तदोष TC ३. अपि Om J ४. अपि Om J ५. अयं Om J ६. °श्चिदस्ति TC ७. °मानत्वम° TC ८. °मपक्षेऽपि TC ९. °दोषः। J

[1]तथा च षट्पक्ष्यामुभयोरसिद्धिः।

कदा षट्पक्षी? यदा [2]षट्पक्षी तदा

**प्रतिषेधेऽपि समानो दोषः**

इत्येवं प्रवर्तते। [3]तदोभयोः पक्षयोरसिद्धिः। यदा तु,

**कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः**

इत्यनेन तृतीयपक्षो युज्यते, तदा विशेषहेतुवचनात् प्रयत्नानन्तरमात्मलाभः शब्दस्य नाभिव्यक्तिः इति सिद्धः प्रथमः पक्षो न षट्पक्षी प्रवर्तत इति ॥४३॥

॥षट्पक्षीरूपकथाभासप्रकरणम्॥

॥अवसितं सभाष्ये न्यायदर्शने पञ्चमाध्यायस्य प्रथमाह्निकम्॥

# पञ्चमाध्यायस्य द्वितीयाह्निकम्

## [ प्रतिज्ञाहेत्वन्यतराश्रितनिग्रहस्थानपञ्चकविशेष-लक्षणप्रकरणम् ]

[**वा** पृः ५१८; **टी** पृः ६७१; **प** पृः ५८६]

विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पान्निग्रहस्थानबहुत्वमिति संक्षेपेणोक्तम्। तदिदानीं विभजनीयम्। निग्रहस्थानानि [१]च खलु पराजयवस्तून्यपराधाधिकरणानि प्रायेण प्रतिज्ञाद्यवयवाश्रयाणि तत्त्ववादिनमतत्त्ववादिनं चाभिसंप्लवन्ते। तेषां विभागः—

**प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासन्न्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि।।५।२।१।।**

[**वा** पृः ५२०; **टी** पृः ६७३; **प** पृः ५८८]

तानीमानि द्वाविंशतिधा विभज्य लक्ष्यन्ते—

**प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः।।५।२।२।।**

साधर्म्यप्रत्यनीकेन धर्मेण प्रत्यवस्थिते प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेऽभ्यनुज्ञाय[२] प्रतिज्ञां जहातीति प्रतिज्ञाहानिः। निदर्शनम्—ऐन्द्रियकत्वादनित्यः शब्दो

---

१. च Om TC     २. ॰नुजानन् TC

घटवदित्युक्ते[१] अपर आह—दृष्टमैन्द्रियकत्वं सामान्यं नित्यम्[२]। कस्मान्न तथा शब्द इत्येवं[३] प्रत्यवस्थिते इदमाह—यद्यैन्द्रियकं सामान्यं नित्यं कामं घटोऽपि[४] नित्योऽस्त्विति। स खल्वयं साधकस्य दृष्टान्तस्य नित्यत्वं [५]प्रसञ्जयन्निगमनान्तमेव पक्षं जहाति। पक्षं जहत्प्रतिज्ञां जहातीत्युच्यते, प्रतिज्ञाश्रयत्वात् पक्षस्येति ॥२ ॥

[**वा** पृः ५२१; **टी** पृः ६७५; **प** पृः ५८९]

**प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम् ॥५।२।३ ॥**

प्रतिज्ञातार्थोऽनित्यः शब्द ऐन्द्रियकत्वाद् घटवदित्युक्ते [६]तस्य प्रतिषेधः प्रतिदृष्टान्तेन हेतुव्यभिचारः सामान्यमैन्द्रियकं नित्यमिति, तस्मिंश्च प्रतिज्ञातार्थप्रतिषेधे, धर्मविकल्पादिति दृष्टान्तप्रतिदृष्टान्तयोः साधर्म्ययोगे धर्मभेदात् सामान्यमैन्द्रियकं सर्वगतम् ऐन्द्रियकस्त्वसर्वगतो घट इति धर्मविकल्पात्, तदर्थनिर्देश इति[७] साध्यसिद्ध्यर्थम्। कथम्? यथा घटोऽसर्वगत एवं शब्दोऽप्यसर्वगतो घटवदेवानित्य इति। तत्रानित्यः शब्द इति पूर्वा प्रतिज्ञा। [८]असर्वगतोऽनित्य इति द्वितीया प्रतिज्ञा प्रतिज्ञान्तरम्। तत्कथं निग्रहस्थानमिति? न प्रतिज्ञायाः साधनं प्रतिज्ञान्तरम्। किं [९]तर्हि? हेतुदृष्टान्तौ साधनं प्रतिज्ञायाः। तदेतदसाधनोपादानमनर्थकमिति। आनर्थक्यान्निग्रहस्थानमिति ॥३ ॥

---

१. ०जिति कृते TC २. सामान्ये नित्ये TC ३. एवम् only in J ४. अपि Om J ५. प्रसजन् J ६. योऽस्य TC ७. इति Om J ८. असर्वगत इति TC ९. तु J

[**वा** पृः ५२२; **टी** पृः ६७७; **प** पृः ५८९]

**प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः ॥५।२।४॥**

गुणव्यतिरिक्तं द्रव्यमिति प्रतिज्ञा। रूपादितोऽर्थान्तरस्यानुपलब्धेरिति हेतुः। सोऽयं प्रतिज्ञाहेत्वोर्विरोधः। कथम्? यदि गुणव्यतिरिक्तं द्रव्यम्, रूपादिभ्योऽर्थान्तरस्यानुपलब्धिर्नोपपद्यते। अथ रूपादिभ्योऽर्थान्तरस्यानुपलब्धिः, गुणव्यतिरिक्तं द्रव्यमिति नोपपद्यते, गुणव्यतिरिक्तं च द्रव्यम्, रूपादिभ्यश्चार्थान्तरस्यानुपलब्धिरिति विरुध्यते व्याहन्यते न संभवतीति ॥४॥

[**वा** पृः ५२२; **टी** पृः ६८०; **प** पृः ५९०]

**पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासन्न्यासः ॥५।२।५॥**

अनित्यः शब्द ऐन्द्रियकत्वाद् [१]घटवदित्युक्ते परो ब्रूयात् सामान्यमैन्द्रियकं न चानित्यम्। एवं शब्दोऽप्यैन्द्रियको न चानित्य इति। एवं प्रतिषिद्धे पक्षे यदि ब्रूयात्—कः पुनराह अनित्यः शब्द इति? सोऽयं प्रतिज्ञातार्थनिह्नवः प्रतिज्ञासन्न्यास इति ॥५॥

[**वा** पृः ५२३; **टी** पृः ६८१; **प** पृः ५९०]

**अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् ॥५।२।६॥**

१. घटवत् Om J

निदर्शनम्—एकप्रकृतीदं व्यक्तमिति प्रतिज्ञा। कस्माद्धेतो:? एकप्रकृतीनां विकाराणां परिमाणात्। मृत्पूर्वकाणां शरावादीनां दृष्टं परिमाणम्, यावान् प्रकृतेर्व्यूहो भवति तावान् विकार इति। दृष्टं च प्रतिविकारं परिमाणम्। अस्ति चेदं परिमाणं प्रतिव्यक्तम्, तदेकप्रकृतीनां विकाराणां परिमाणात् पश्यामो व्यक्तमिदमेकप्रकृतीति। अस्य व्यभिचारेण प्रत्यवस्थानम्—नानाप्रकृतीनामेकप्रकृतीनां च विकाराणां दृष्टं परिमाणमिति।

एवं प्रत्यवस्थिते आह—एकप्रकृतिसमन्वये सति [१]शरावादीनां विकाराणां परिमाणदर्शनात्। सुखदु:खमोहसमन्वितं हीदं [२]सर्वं व्यक्तं परिमितं गृह्यते। [३]तत्र प्रकृत्यन्तररूपसमन्वयाभावे सत्येकप्रकृतित्वमिति। तदिदमविशेषोक्ते हेतौ प्रतिषिद्धे विशेषं ब्रुवतो हेत्वन्तरं भवति। सति च हेत्वन्तरभावे पूर्वस्य हेतोरसाधकत्वात् निग्रहस्थानम्। हेत्वन्तरवचने सति यदि हेत्वर्थनिदर्शनो दृष्टान्त उपादीयते, नेदं व्यक्तमेकप्रकृति भवति, प्रकृत्यन्तरोपादानात्। अथ नोपादीयते, दृष्टान्ते हेत्वर्थस्यानिदर्शितस्य साधकभावानुपपत्तेरानर्थक्याद्धेतोरनिवृत्तं निग्रहस्थान-मिति ॥६ ॥

॥प्रतिज्ञाहेत्वन्यतराश्रितनिग्रहस्थानपञ्चकविशेषलक्षणप्रकरणम्॥

# [ प्रकृतोपयोगिवाक्यार्थप्रतिपत्तिफलशून्यनिग्रहस्थान-चतुष्कप्रकरणम् ]

[**वा** पृः ५२३; **टी** पृः ६८२; **प** पृः ५९१]

**प्रकृतादर्थादप्रतिसंबद्धार्थमर्थान्तरम्॥५॥२॥७॥**

---

१. शरावादिवि॰ TC    २. सर्वं Om TC    ३. तस्य J

यथोक्तलक्षणे पक्षप्रतिपक्षपरिग्रहे हेतुतः साध्यसिद्धौ प्रकृतायां ब्रूयात्— नित्यः शब्दोऽस्पर्शत्वादिति हेतुः। हेतुश्च नाम हिनोतेर्धातोस्तुनि प्रत्यये कृदन्तं पदम्। पदं च नामाख्यातोपसर्गनिपाताः। अभिधेयस्य क्रियान्तरयोगाद् विशिष्यमाणरूपः शब्दो नाम। क्रियाकारकसमुदायः कारकसंख्याविशिष्ट-क्रियाकालयोगाभिधाय्याख्यातम्, धात्वर्थमात्रं च कालाभिधानविशिष्टम्। प्रयोगेष्वर्थादभिद्यमानरूपा निपाताः। उपसृज्यमानाः क्रियावद्योतका उपसर्गा इत्येवमादि। तदर्थान्तरं वेदितव्यमिति ॥७॥

[**वा** पृः ५२३; **टी** पृः ६८४; **प** पृः ५९२]

**वर्णक्रमनिर्देशवन्निरर्थकम्॥५।२।८॥**

यथा अनित्यः शब्दः कचटतपानां[1] जवगडदशत्वात्, झभञ्घढधषवदित्येवं प्रकारं निरर्थकम्। अभिधानाभिधेयभावानुपपत्तौ अर्थगतेरभावाद् वर्णा एव क्रमेण निर्दिश्यन्त इति ॥८॥

[**वा** पृः ५२३; **टी** पृः ६८४; **प** पृः ५९३]

**परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम्॥५।२।९॥**

यद्वाक्यं परिषदा प्रतिवादिना च त्रिरभिहितमपि न विज्ञायते श्लिष्टशब्दम-

---

१. कचतपानां T; कचटतपाः C

प्रतीतप्रयोगमतिद्रुतोच्चरितमित्येवमादिना कारणेन तदविज्ञातार्थम्[१] असामर्थ्य-संवरणाय प्रयुक्तमिति निग्रहस्थानमिति॥९॥

[**वा** पृः ५२४; **टी** पृः ६८५; **प** पृः ५९३]

**पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकम्॥५।२।१०॥**

यत्रानेकस्य पदस्य वाक्यस्य वा [२]पौर्वापर्येणान्वययोगो नास्तीत्यसम्बद्धार्थता[३] गृह्यते, तत् समुदायार्थस्यापायादपार्थकम्। यथा—दशदाडिमानि, षडपूपाः, कुण्डम्, अजाजिनम्, पललपिण्डः, अथ रौरुकमेतत् कुमार्याः पाय्यम्[४], तस्याः पिता अप्रतिशीन इति[५]॥१०॥

॥प्रकृतोपयोगिवाक्यार्थप्रतिपत्तिफलशून्यनिग्रहस्थानचतुष्कप्रकरणम्॥

## [ स्वसिद्धान्तानुरूपप्रयोगाभासनिग्रहस्थानत्रिकप्रकरणम् ]

[**वा** पृः ५२४; **टी** पृः ६८६; **प** पृः ५९३]

**अवयवविपर्यासवचनमप्राप्तकालम्॥५।२।११॥**

[६]प्रतिज्ञादीनामवयवानां यथालक्षणमर्थवशात् क्रमः। तत्रावयवविपर्यासेन वचनमप्राप्तकालमसम्बद्धार्थं निग्रहस्थानमिति॥११॥

---

१. अविज्ञातमविज्ञाता° C २. °णार्थयो° J ३. °र्थत्वं TC ४. याज्यम् J
५. द्र. महाभाष्यम्, १।१।१, १।२।४५ ६. निग्रहस्थानमिति प्रति°J

[**वा** पृः ५२५; **टी** पृः ६८९; **प** पृः ५९६]

**हीनमन्यतमेनाप्यवयवेन न्यूनम्॥५।२।१२॥**

प्रतिज्ञादीनामवयवानामन्यतमेनाप्यवयवेन हीनं तन्न्यूनं नाम[१] निग्रहस्थानम्। साधनाभावे साध्यासिद्धिरिति॥१२॥

[**वा** पृः ५२५; **टी** पृः ६८९; **प** पृः ५९७]

**हेतूदाहरणाधिकमधिकम्॥५।२।१३॥**

एकेन कृतत्वादितरस्य[२] आनर्थक्यमिति। तदेतन्नियमाभ्युपगमे वेदितव्यमिति॥१३॥

॥स्वसिद्धान्तानुरूपप्रयोगाभासनिग्रहस्थानत्रिकप्रकरणम्॥

## [ पुनरुक्तनिग्रहस्थानप्रकरणम् ]

[**वा** पृः ५२६; **टी** पृः ६९०; **प** पृः ५९७]

**शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात्॥५।२।१४॥**

अन्यत्रानुवादात् शब्दपुनरुक्तमर्थपुनरुक्तं वा। [३]अनित्यः शब्दोऽनित्यः शब्द

---

१. तत्, नाम J only   २. अन्यतरस्य TC   ३. नित्यः शब्दो नित्यः TC

इति शब्दपुनरुक्तम्। अर्थपुनरुक्तम् अनित्यः शब्दो निरोधधर्मको [१]ध्वान इति। अनुवादे त्वपुनरुक्तम्, शब्दाभ्यासादर्थविशेषोपपत्तेः। यथा

**हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनम् निगमनम् [ १।१।३९ ]**

इति ॥१४॥

[**वा** पृः ५२६; **टी** पृः ६९०; **प** पृः ५९७]

## अर्थादापन्नस्य स्वशब्देन पुनर्वचनम्॥५।२।१५॥

पुनरुक्तमिति प्रकृतम्। निदर्शनम्—उत्पत्तिधर्मकत्वादनित्यमित्युक्त्वा अर्थादापन्नस्य योऽभिधायकः शब्दस्तेन स्वशब्देन ब्रूयाद् अनुत्पत्तिधर्मकं नित्यमिति। तच्च पुनरुक्तं वेदितव्यम्। अर्थसम्प्रत्ययार्थे हि[२] शब्दप्रयोगे प्रतीतः सोऽर्थोऽर्थापत्त्येति ॥१५॥

॥पुनरुक्तनिग्रहस्थानप्रकरणम्॥

# [ उत्तरविरोधिनिग्रहस्थानचतुष्कप्रकरणम् ]

[**वा** पृः ५२७; **टी** पृः ६९१; **प** पृः ५९७]

## विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम्॥५।२।१६॥

विज्ञातस्य वाक्यार्थस्य परिषदा [३]वादिना [४]च त्रिरभिहितस्य यदप्रत्युच्चारणं

---

१. ध्वनिर् TC  २. हि Om TC  ३. प्रतिवादिना C  ४. च Om TC

[1]प्रतिवादिना तदननुभाषणं नाम निग्रहस्थानमिति। अप्रत्युच्चारयन् किमाश्रयं परपक्षप्रतिषेधं ब्रूयादिति[2] ॥१६॥

[**वा** पृ: ५२७; **टी** पृ: ६९३; **प** पृ: ५९७]

## अविज्ञातं चाज्ञानम्॥५।२।१७॥

विज्ञातार्थस्य परिषदा [3]वाक्यस्य [4]वादिना [5]च त्रिरभिहितस्यापि[6] यदविज्ञानं प्रतिवादिनः[7] तदज्ञानं नाम निग्रहस्थानमिति।

[8]अर्थं खल्वविज्ञाय कस्य प्रतिषेधं ब्रूयादिति॥१७॥

[**वा** पृ: ५२७; **टी** पृ: ६९३; **प** पृ: ५९८]

## उत्तरस्याप्रतिपत्तिरप्रतिभा॥५।२।१८॥

परपक्षप्रतिषेध उत्तरम्। तद् यदा न प्रतिपद्यते तदा निगृहीतो भवति[9] ॥१८॥

[**वा** पृ: ५२८; **टी** पृ: ६९४; **प** पृ: ५९८]

## कार्यव्यासङ्गात्कथाविच्छेदो विक्षेपः॥५।२।१९॥

यत्र कर्तव्यं व्यासज्य कथां व्यवच्छिनत्ति—इदं मे करणीयं परिहीयते[10],

---

१. प्रतिवादिना Om TC २. इति Om TC ३. वाक्यस्य Om TC ४. प्रति-वादिना C ५. च Om TC ६. अपि Om TC ७. प्रतिवादिनः Om TC ८. अयं TC ९. वेदितव्य इति for भवति J १०. विद्यते TC; परिहीयते JC var

तस्मिन्नवसिते पश्चात् कथयिष्यामीति[१] विक्षेपो नाम निग्रहस्थानम्। एकनिग्रहावसानायां कथायां स्वयमेव कथान्तरं प्रतिपद्यत इति॥१९॥

॥उत्तरविरोधिनिग्रहस्थानचतुष्कप्रकरणम्॥

## [ दोषनिरूप्यमतानुज्ञादिनिग्रहस्थानत्रिकप्रकरणम् ]

[**वा** पृः ५२८; **टी** पृः ६९५; **प** पृः ५९८]

**स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा॥५।२।२०॥**

यः परेण चोदितं दोषं स्वपक्षेऽभ्युपगम्यानुद्धृत्य वदति—भवत्पक्षेऽपि समानो दोष इति, स स्वपक्षे दोषाभ्युपगमात् परपक्षेऽपि दोषं [२]प्रसञ्जयन् परमतमनुजानातीति मतानुज्ञा[३] नाम निग्रहस्थानमापद्यत इति॥२०॥

[**वा** पृः ५२९; **टी** पृः ६९५; **प** पृः ५९८]

**निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम्॥५।२।२१॥**

पर्यनुयोज्यो नाम निग्रहस्थानोपपत्त्या चोदनीयः। तस्योपेक्षणं निग्रहस्थानं प्राप्तोऽसीत्यननुयोगः। एतच्च कस्य पराजय इत्यनुयुक्तया परिषदा वचनीयम्। न खलु निग्रहं प्राप्तः स्वकौपीनं विवृणुयादिति॥२१॥

---

१. कथयामीति TC २. प्रसजन् J ३. मतानुज्ञां TC

[**वा** पृः ५२९; **टी** पृः ६९६; **प** पृः ५९९]

**अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः ॥५।२।२२॥**

निग्रहस्थानलक्षणस्य मिथ्याध्यवसायादनिग्रहस्थाने निगृहीतोऽसीति परं ब्रुवन् [१]निरनुयोज्यस्यानुयोगान्निगृहीतो वेदितव्य इति ॥२२॥

॥दोषनिरूप्यमतानुज्ञादिनिग्रहस्थानत्रिकप्रकरणम्॥

## [ कथकान्योक्तिनिरूप्यनिग्रहस्थानद्वयप्रकरणम् ]

[**वा** पृः ५२९; **टी** पृः ६९७; **प** पृः ५९९]

**सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः ॥५।२।२३॥**

कस्यचिदर्थस्य तथाभावं प्रतिज्ञाय प्रतिज्ञातार्थविपर्ययाद् अनियमात् कथां [२]प्रसञ्जयतोऽपसिद्धान्तो वेदितव्यः[३]। यथा न सदात्मानं जहाति, न सतो विनाशः, नासदात्मानं लभते, नासदुत्पद्यत इति सिद्धान्तमभ्युपेत्य [४]स्वपक्षमवस्थापयति—एकप्रकृतीदं व्यक्तं विकाराणामन्वयदर्शनात्। मृदन्वितानां शरावादीनां दृष्टमेकप्रकृतित्वम्। तथा चायं व्यक्तभेदः सुखदुःखमोहान्वितो [५]दृश्यते। तस्मात्समन्वयदर्शनात् सुखादिभिरेकप्रकृतीदं विश्वम्[६] इति।

एवमुक्तवाननुयुज्यते—अथ प्रकृतिर्विकार इति कथं लक्षितव्यमिति। यस्यावस्थितस्य [७]धर्मिणः धर्मान्तरनिवृत्तौ धर्मान्तरं प्रवर्तते, सा प्रकृतिः। यत्तद्

---

१. ॰योज्यानु॰ for योज्यस्यानु॰TC २. प्रसजतः J ३. विज्ञेयः J ४. पक्षमवस्था J; स्वपक्षं व्यव॰ J ५. गृह्यते J ६. व्यक्तम् J ७. धर्मिणः Om TC

धर्मान्तरं प्रवर्तते निवर्तते [१]वा स विकार इति। सोऽयं प्रतिज्ञातार्थविपर्यासादनियमात् कथां प्रसञ्जयति[२]। प्रतिज्ञातं खल्वनेन—नासदाविर्भवति, न सत् तिरोभवतीति। सदसतोश्च तिरोभावाविर्भावावन्तरेण[३] न कस्यचित् प्रवृत्तिः प्रवृत्त्युपरमश्च संभवति। मृदि खल्ववस्थितायां भविष्यति शरावादिलक्षणं धर्मान्तरमिति प्रवृत्तिर्भवतीति। [४]अभूदिति च प्रवृत्त्युपरमः। तदेतन्मृद्धर्माणामपि न स्यात्।

एवं प्रत्यवस्थितः **सांख्यो** यदि सतश्चात्महानमसतश्चात्मलाभमभ्युपैति, तदस्यापसिद्धान्तो [५]निग्रहस्थानं भवति। अथ नाभ्युपैति, पक्षोऽस्य न सिध्यतीति॥२३॥

[**वा** पृः ५३०; **टी** पृः ६९९; **प** पृः ५९९]

**हेत्वाभासाश्च यथोक्ताः॥५।२।२४॥**

हेत्वाभासाश्च निग्रहस्थानानि। किं पुनर्लक्षणान्तरयोगाद्धेत्वाभासा निग्रहस्थानत्वमापद्यन्ते[६], यथा प्रमाणानि प्रमेयत्वमित्यत आह—यथोक्ता इति। हेत्वाभासलक्षणेनैव निग्रहस्थानभाव इति।

त इमे प्रमाणादयः पदार्था उद्दिष्टा लक्षिता परीक्षिताश्चेति॥२४॥

॥कथकान्योक्तिनिरूप्यनिग्रहस्थानद्वयप्रकरणम्॥

योऽक्षपादमृषिं न्यायः प्रत्यभाद् वदतां वरम्।
तस्य वात्स्यायन इदं भाष्यजातमवर्तयत्॥

॥अवसितं सभाष्ये न्यायदर्शने पञ्चमाध्यायस्य द्वितीयाह्निकम्॥

॥ समाप्तः पञ्चमोऽध्यायः॥

॥ समाप्तं सभाष्यं न्यायदर्शनम्॥

---

१. च J  २. प्रसजति J  ३. °भावाविर्भावमन्त°TC  ४. अस्मादिदमुत्पन्नं कार्यमत्र हि प्रवृत्तिः Added before अभूदिति J  ५. निग्रहस्थानं Om J  ६. आपन्नाः for आपद्यन्ते TC

# न्यायसूत्रसूची

## प्रथमाध्यायस्य प्रथमाह्निकम्

### अभिधेयप्रयोजनसंबन्धप्रकरणम् ॥१॥



### प्रमाणलक्षणप्रकरणम् ॥२॥



### प्रमेयलक्षणप्रकरणम् ॥३॥

## न्यायपूर्वाङ्गलक्षणप्रकरणम् ॥४ ॥



## न्यायाश्रयसिद्धान्तलक्षणप्रकरणम् ॥५ ॥



## न्यायलक्षणप्रकरणम् ॥६ ॥



## न्यायोत्तराङ्गलक्षणप्रकरणम् ॥७ ॥

# प्रथमाध्यायस्य द्वितीयाह्निकम्

## कथालक्षणप्रकरणम्॥८॥



## हेत्वाभासलक्षणप्रकरणम्॥९॥



## छलप्रकरणम्॥१०॥



## पुरुषाशक्तिलिङ्गदोषसामान्यलक्षणप्रकरणम्॥११॥

# द्वितीयाध्यायस्य प्रथमाह्निकम्

## संशयपरीक्षाप्रकरणम्॥१२॥



## प्रमाणसामान्यपरीक्षाप्रकरणम्॥१३॥



## प्रत्यक्षलक्षणपरीक्षाप्रकरणम्॥१४॥

## प्रत्यक्षस्यानुमानत्वपरीक्षाप्रकरणम् ॥१५॥



## अवयविपरीक्षाप्रकरणम् ॥१६॥



## अनुमानपरीक्षाप्रकरणम् ॥१७॥



## वर्तमानकालपरीक्षाप्रकरणम् ॥१८॥



## उपमानपरीक्षाप्रकरणम् ॥१९॥

## शब्दसामान्यपरीक्षाप्रकरणम् ॥२०॥



## शब्दविशेषपरीक्षाप्रकरणम् ॥२१॥

# द्वितीयाध्यायस्य द्वितीयाह्निकम्

## प्रमाणचतुष्ट्वपरीक्षाप्रकरणम् ॥२२॥



## शब्दानित्यत्वप्रकरणम् ॥२३॥

## शब्दपरिणामप्रकरणम् ॥२४॥

## पदार्थनिरूपण[ शब्दशक्तिपरीक्षा ]प्रकरणम्॥२५॥



# तृतीयाध्यायस्य प्रथमाह्निकम्

## इन्द्रियभेदप्रकरणम्॥२६॥



## शरीरव्यतिरेक्यात्मप्रकरणम्॥२७॥

## चक्षुरद्वैतप्रकरणम् ॥२८॥



## मनोव्यतिरिक्तात्मप्रकरणम् ॥२९॥



## आत्मनित्यत्वप्रकरणम् ॥३०॥



## शरीरपरीक्षाप्रकरणम् ॥३१॥

## इन्द्रियभौतिकत्वप्रकरणम्॥३२॥



## इन्द्रियनानात्वप्रकरणम्॥३३॥

## अर्थपरीक्षाप्रकरणम् ॥३४॥



# तृतीयाध्यायस्य द्वितीयाह्निकम्

## बुद्ध्यनित्यताप्रकरणम् ॥३५॥

## क्षणभङ्गप्रकरणम्॥३६॥



## बुद्धेरात्मगुणत्वप्रकरणम्॥३७॥

## बुद्धेरुत्पन्नापवर्गित्वप्रकरणम् ॥३८ ॥



## बुद्धेः शरीरगुणव्यतिरेकप्रकरणम् ॥३९ ॥



## मनःपरीक्षाप्रकरणम् ॥४० ॥

## शरीरस्यादृष्टनिष्पाद्यत्वप्रकरणम् ॥४१॥



# चतुर्थाध्यायस्य प्रथमाह्निकम्

## प्रवृत्तिदोषसामान्यपरीक्षाप्रकरणम् ॥४२॥



## दोषत्रैराश्यप्रकरणम् ॥४३॥

## प्रेत्यभावपरीक्षाप्रकरणम् ॥४४॥



## शून्यतोपादानताप्रकरणम् ॥४५॥



## ईश्वरोपादानताप्रकरणम् ॥४६॥



## आकस्मिकत्वप्रकरणम् ॥४७॥



## सर्वानित्यतानिराकरणप्रकरणम् ॥४८॥



## सर्वनित्यत्वनिराकरणप्रकरणम् ॥४९॥

## सर्वपृथक्त्वनिराकरणप्रकरणम् ।।५०।।



## सर्वशून्यतानिराकरणप्रकरणम् ।।५१।।



## संख्यैकान्तवादनिराकरणप्रकरणम् ।।५२।।



## फलपरीक्षाप्रकरणम् ।।५३।।

## दुःखपरीक्षाप्रकरणम् ।।५४ ।।



## अपवर्गपरीक्षाप्रकरणम् ।।५५ ।।



# चतुर्थाध्यायस्य द्वितीयाह्निकम्

## तत्त्वज्ञानोत्पत्तिप्रकरणम् ।।५६ ।।



## अवयवावयविप्रकरणम् ।।५७ ।।

## निरवयवत्वप्रकरणम् ॥५८॥



## बाह्यार्थभङ्गनिराकरणप्रकरणम् ॥५९॥

## तत्त्वज्ञानविवृद्धिप्रकरणम्॥६०॥



## तत्त्वज्ञानपरिपालनप्रकरणम्॥६१॥



# पञ्चमाध्यायस्य प्रथमाह्निकम्

## सत्प्रतिपक्षदेशनाभासप्रकरणम्॥६२॥

## साध्यदृष्टान्तधर्मविकल्पप्रभवोत्कर्षसमादिजातिषट्कप्रकरणम् ॥६३ ॥



## प्राप्त्यप्राप्तियुगनद्धवाहिविकल्पोपक्रमजातिद्वयप्रकरणम् ॥६४ ॥



## प्रसङ्गप्रतिदृष्टान्तसमजातिद्वयप्रकरणम् ॥६५ ॥



## अनुत्पत्तिसमप्रकरणम् ॥६६ ॥



## संशयसमप्रकरणम् ॥६७ ॥



## प्रकरणसमप्रकरणम् ॥६८ ॥



## अहेतुसमप्रकरणम् ॥६९ ॥

## अर्थापत्तिसमप्रकरणम् ॥७० ॥



## अविशेषसमप्रकरणम् ॥७१ ॥



## उपपत्तिसमप्रकरणम् ॥७२ ॥



## उपलब्धिसमप्रकरणम् ॥७३ ॥



## अनुपलब्धिसमप्रकरणम् ॥७४ ॥



## अनित्यसमप्रकरणम् ॥७५ ॥



## नित्यसमप्रकरणम् ॥७६ ॥

## कार्यसमप्रकरणम् ॥७७॥



## षट्पक्षीरूपकथाभासप्रकरणम् ॥७८॥



# पञ्चमाध्यायस्य द्वितीयाह्निकम्

## प्रतिज्ञाहेत्वन्यतराश्रितनिग्रहस्थानपञ्चकविशेषलक्षणप्रकरणम् ॥७९॥



## प्रकृतोपयोगिवाक्यार्थप्रतिपत्तिफलशून्यनिग्रहस्थानचतुष्कप्रकरणम् ॥८०॥



## स्वसिद्धान्तानुरूपप्रयोगाभासनिग्रहस्थानत्रिकप्रकरणम् ॥८१॥

## पुनरुक्तनिग्रहस्थानप्रकरणम् ॥८२॥



## उत्तरविरोधिनिग्रहस्थानचतुष्कप्रकरणम् ॥८३॥



## दोषनिरूप्यमतानुज्ञादिनिग्रहस्थानत्रिकप्रकरणम् ॥८४॥



## कथकान्योक्तिनिरूप्यनिग्रहस्थानद्वयप्रकरणम् ॥८५॥

# वर्णानुक्रमिकन्यायसूत्रसूची

शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवाभावानर्थान्तरभावाच्चाप्रतिषेधः॥२।२।२॥

शब्दसंयोगविभवाच्च सर्वगतम् ॥४।२।२१॥

शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात्॥५।२।१४॥

शब्दार्थव्यवस्थानादप्रतिषेधः॥२।१।५४॥

शब्दोऽनुमानमर्थस्यानुपलब्धेरनुमेयत्वात्॥२।१।४९॥

शरीरगुणवैधर्म्यात्॥३।२।५३॥

शरीरदाहे पातकाभावात् ॥३।१।४॥

शरीरव्यापित्वात्॥३।२।५०॥

शरीरोत्पत्तिनिमित्तवत् संयोगोत्पत्तिनिमित्तं कर्म॥३।२।६६॥

शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेषः॥२।१।६७॥

श्रुतिप्रामाण्याच्च ॥३।१।३१॥

सगुणद्रव्योत्पत्तिवत्तदुत्पत्तिः॥३।१।२५॥

सगुणानामिन्द्रियभावात्॥३।१।६९॥

सङ्ख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम् ॥४।१।४१॥

स चतुर्विधः सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात्॥१।१।२७॥

सद्यः कालान्तरे च फलनिष्पत्तेः संशयः॥४।१।४४॥

स द्विविधो दृष्टादृष्टार्थत्वात्॥१।१।८॥

सन्तानानुमानविशेषणात्॥२।२।१६॥

स प्रतिपक्षस्थापनाहीनो वितण्डा ॥१।२।३॥

समाधिविशेषाभ्यासात्॥४॥२।३८॥

समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः ॥१।१।२९॥

समानप्रसवात्मिका जातिः॥२।२।६९॥

समानानेकधर्माध्यवसायादन्यतरधर्माध्यवसायाद् वा न संशयः॥२।१।१॥

समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः॥१।१।२३॥

समारोपणादात्मन्यप्रतिषेधः॥४।१।६१॥

सम्प्रदानात् ॥२।२।२५॥

सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः ॥१।१।२८॥

सर्वत्रैवम्॥५।१।४०॥

सर्वप्रमाणप्रतिषेधाच्च प्रतिषेधानुपपत्तिः॥२।१।१३॥

# विशिष्टनामसूची

# अवतरणसूची